# ॥ आह्निकसंग्रहः ॥

ग्रन्थकारः —

तैक्काट् योगियार् महाशयः

सम्पादकः

वेदरत्नम् एर्कर रामन् नम्बूतिरि

प्रसाधनम्

एर्कर स्मारकसमितिः

शुकपुरम्

*"This book is Published with the financial assistance of Tirumala Tirupati Devasthanams under their Scheme Aid to Publish Religious Books"*

तिरुमल तिरुपति देवस्थानस्य साहाय्येन प्रसिद्धीकृतमिदम्

(Sanskrit)

ĀHNIKASAMGRAHA

Author :
THIKKATTU YOGIYAR MAHASAYA

Sampadaka :
Vedaratnam Erkara Raman Nambudiri

Publisher :
Erkara Smaraka Samithi, Sukapuram

Financed by :
Thirumala Thiruppathi Devastanams

I st Published August 1990

Copies 1000

Price Rs.

# उपोद्घातः ।

केरळीयब्राह्मणानां आचारः स्मृतिसिध्दाः न भवन्तीति अभिप्रायः अस्ति । तस्य अभिप्रायस्य खण्डनार्थं केरळीयपण्डितेन बाल्वनालयस्थयोगीश्वरेण (तैक्काट् योगियार) अनेके ग्रन्थाः रचिताः, येषु ब्राह्मणानाम् आचाराणां सामान्यतः, केरळीय. ब्राह्मणानां विशेषतः च प्रतिपादनमस्ति । स पण्डितः ४०० वर्षेभ्यः पूर्वं केरेळेषु जविति स्म । तैर्महाशयैः रचितेषु ग्रन्थेषु अन्यतमः भवति अयं आह्निकसंग्रहः ।

अस्मिन् ग्रन्थे प्रबोधनादिस्वापान्तानां आह्निकानुष्ठानानां एकादशीव्रतश्रद्धादीनां विशेषाचाराणां च प्रतिपादनं दृश्यते । तत्र प्रमाणात्वेन एकैव स्मृतिः न स्वीकृता । तत्तदाचाराणां प्रतिपादनं भिन्नानि स्मृतिवाक्यान्युद्धृत्य कृतम् । एवं पराशरमाधवीयवैद्यनाथदक्षादयः अनेकाः स्मृतयः अस्मिन् ग्रन्थे प्रमाणत्वेन उद्धृताः भवन्ति ।

योगीश्वराणां ग्रन्थाः हस्तलिखितग्रन्थरूपाः एव लभ्यन्ते । न मुद्रिताः । अयम् आह्निकसंग्रहः इदानीं प्रथमतया नागरलिप्यां मुद्रणं कृत्वा प्रकाशयितुं यत्नः क्रियते । वैदिकधर्माणां प्रचारणे पोषणे च उत्सुकानां सज्जनानां सहायः प्रोत्साहनं चात्र लभिष्यतीति मन्ये । तथा तिरुप्पति देवस्थानस्यापि सहायः अस्मिन् उद्यमे स्यादिति प्रतीक्षां करोमि ।

योगीश्वराणां अद्य लब्धाः ग्रन्थाः (हस्तलिखिता एव न मुद्रिताः) अधः लिख्यन्ते ।

१ आह्निकसंग्रहः।

२ श्रौतप्रायश्चित्तसंग्रहः।

३ स्मार्तप्रायश्चित्तसंग्रहः।

४ कौषीतकश्रौतकारिका।

(अग्न्याधानादि अतिरात्रपर्यन्तम्)

५ षट्पत्रकारिका।

(इष्टकाशालादिनिर्माणसहितम्)

६ पञ्चपत्रकारिका।

(इष्टकाशालादिनिर्माणसहितम्)

७ नामधेयम्।

(केरळीयनामधेयानां संस्कृतनामधेयानि संस्कृतनामधेयानां केरळीयनामधेयानि च।)

८ वर्णोच्चारलक्षणम्।

अस्य ग्रन्थस्य प्रकाशनं कर्तुं मम अवसरः लब्धः इति अहं कृतार्थोऽस्मि। अनेनाहं आत्मानं धन्यतमं मन्ये। सज्जनसमक्षं अस्य समर्पणमहं भक्तिबहुमानपुरस्सरं करोमि। योगीश्वरैः रचितानां इतरेषामपि ग्रन्थानां प्रकाशनं कर्तुं अहमुत्सुकोऽस्मि। तदर्थमहं शक्तः भूयासमिति दक्षिणामूर्तिं प्रार्थयामि।

सज्जनविधेयः

वेदरत्नम् एकंर रामन् नम्पूतिरि। मुक्तिस्थलम्।

श्रीः

## ॥ आह्निकसंग्रहः ॥

विषयानुक्रमणी


१ उत्थानम् ।
२ ब्राह्ममुहूर्तलक्षणम् ।
३ दृश्यादृश्यविवेकः ।
४ मलमूत्रविसर्जनम् ।
५ शौचविधिः ।
६ तत्र बालादीनां भेदः ।
७ कालदेशादिभेदेन शौचविधिः ।
८ गण्डूषविधिः ।
९ आचमनविधिः ।
१० नग्नलक्षणम् ।
११ दन्तधावनविधिः ।
१२ तत्र वर्ज्यदिनानि ।
१३ तत्र स्त्रीणां विशेषः ।
१४ स्नानविधिः ।
१५ स्नाने वर्ज्यानि जलानि ।
१६ शूद्रादिभिस्सह स्नाननिषेधः ।
१७ मार्जनविधिः ।
१८ अघमर्षणम्ः ।
१९ सन्ध्यावन्दनविधिः ।
२० सन्ध्याकालः ।
२१ तर्पणविधिः ।
२२ वस्त्रनिष्पीडनम् ।
२३ सन्ध्याकालातिक्रमप्रायश्चित्तम्
२४ तत्रानुकल्पम् ।

२५ तत्र देशकाल भेदः ।
२६ आसनविधिः ।
२७ जपविधिः ।
२८ तत्र पदविच्छेदः ।
२९ जपे मानसादित्रैविध्यः ।
३० मानसादीनां लक्षणम् ।
३१ तत्रोच्चारणप्रकारः ।
३२ गायत्र्याः अर्थः ।
३३ गायत्रीप्रशंसा ।
३४ जपे वर्जनीयानि
३५ गणनविधिः
३६ मालाविधिः ।
३७ मालारचनाविधिः ।
३८ मालाकर्षणप्रकारः ।
३९ मालायाः पतनादौ प्रायश्चित्तम् ।
४० जपे समयभेदेन इतिकर्तव्यताभेदः ।
४१ सन्ध्यात्रयं ध्यानभेदः ।
४२ सन्ध्यावन्दनप्रशंसा ।
४३ जपानन्तरकृत्यम् ।
४४ ऊर्ध्वपुण्ड्रविधिः ।
४५ पुण्ड्रधारणप्रशंसा ।
४६ त्रिपुण्ड्रविधिः तत्प्रशंसा च ।
४७ भस्मप्रशंसा ।
४८ गौणस्नानविधिः
४९ अनापदि गौणस्नानदोषः ।
५० द्विराचमनविधिः ।
५१ पञ्चयज्ञविधिः ।
५२ तदकरणे प्रत्यपायः ।
५३ श्राद्धदिने वैश्वदेवकालः ।

५४ आतिथ्यम् ।
५५ ग्रासभिक्षाहन्तकाराणां लक्षणम् ।
५६ आतिथ्यप्रशंसा—अकरणे प्रत्यपायश्च ।
५७ भोजनविधिः ।
५८ तत्र शब्दनिषेधः ।
५९ एक पङ्क्त्वासमदाननिषेधः ।
६० पङ्क्तिभेदप्रकारः ।
६१ पङ्क्तिभोजने त्वरानिषेधः ।
६२ अभक्ष्याणि वर्जनीयान्यन्नानि ।
६३ भोजने पात्रनियमः ।
६४ तीर्थयात्राविधि ।
६५ माघस्नानविधिः ।
६६ रजस्वलाधर्मः ।
६७ आतुरस्नानविधिः ।
६८ अशुचिस्पर्शनविषयम् ।
६९ तत्र विदुषस्पर्शने दोषाभावः ।
७० चण्डालादीनां विप्रकर्षणप्रमाणम् ।
७१ प्राणायामप्रकारः।
७२ निशास्नानविषयः ।
७३ नरकचतुर्दशीस्नानम् ।
७४ केषाञ्चिद्दर्शनं पुण्यम् ।
७५ कदर्यवार्धुषिकदेवललक्षणम् ।
७६ शोषणादिना पापनाशनम् ।
७७ केषाञ्चिद्भस्मरुद्राक्षयोरश्रद्धा ।
७८ रेखया गणनाप्रकारः ।
७९ अज्ञातरजस्कयास्पृष्टवस्तुविषयः ।
८० श्ववराहादिस्पर्शने ।
८१ अन्त्यजच्छायास्पर्शने ।
८२ गोमयमन्त्रम् ।

८३ भक्ष्यवस्तुनि क्षुद्रोपघाते ।
८४ अभक्ष्यनिवृत्तेः फलम् ।
८५ क्षीरे लवणमित्यादिकनिषिद्धवर्ज्यानि ।
८६ वेदानभ्यासाहारवर्जनान्नदोषफलम् ।
८७ पुनरप्यभक्ष्याणि ।
८८ केषाञ्चिद्भैषजयार्थेन दोषः ।
८९ अभक्ष्यभक्षणप्रायश्चित्तम्
९० शूद्रान्नविषयम् ।
९१ कुत्रचिद्भोजननिषेधः ।
९२ कुत्रचिद्रात्रिभोजननिषेधः ।
९३ ग्रहणविषयः ।
९४ क्षीरविषये भक्ष्यत्वाभक्ष्यत्व विवेकः ।
९५ अन्नजरणार्थोमन्त्रः ।
९६ दिनचर्याक्रमः ।
९७ ताम्बूलचर्वणविषयः ।
९८ स्वापविधिः ।
९९ सदाहारानुष्ठानफलम् ।
१०० ऋतुकालगमनम्
१०१ दासगोपालादीनां लक्षणम् ।
१०२ केषाञ्चित्पाकदोषाभावः ।
१०३ नैमित्तिकपुण्यस्नानविषयम् ।
१०४ शूद्रभुक्तावशिष्टविषयः ।
१०५ कानिचिद्द्रव्यदिवानि । कानिद्धस्तेन ॥
१०७ प्रोक्षणमन्त्रार्थः ।
१०८ गायत्रीमन्त्रार्थः ।
१०९ केषाञ्चित् मन्त्राण अपि अर्थः ।
११० उपवासव्रतादौ दिनप्रमाणम्
१११ पूर्वाह्णादिकालविभागः ।
११२ एकादशिद्वादश्युपवास विषयः ।
११३ उपवासश्राद्धयोर्योगे ।

श्रीः

# ॥ आह्निकसंग्रहः ॥

हरिः श्रीगणपतयेनमः । अविघ्नमस्तु

अथ आह्निकं व्याख्यास्यामः ।

तत्र मनुः —

१ ब्राह्मे मुहूर्ते बुध्येत धर्मार्थावनुचिन्तयन् ।
कायक्लेशांश्च तन्मूलान् वेदतत्वार्थमेव च ॥ इति ।

वेदतत्वार्थं परमात्मानमित्यर्थः ।

व्यासोऽपि—

ब्राह्मे मुहूर्ते उत्थाय धर्ममर्थञ्च चिन्तयेत् ।
कायक्लेशन्तदुद्भूतन्ध्यायीत मनसेश्वरम् ॥ इति ।

स्मृतिरत्नावल्यान्तु—

य इच्छेच्छाश्वतीं सिद्धिं यमस्यादर्शनन्तथा ।
सततं तेन कर्तव्यो ब्राह्मे काले प्रजागरः ॥

ब्राह्मे मुहूर्ते सेवेत शयनं यत्र दम्पती ।
श्मशानतुल्यन्तद्वेश्म पितृभिः परिवर्जते ॥

पितृशब्दो देवर्षिभूतादीनामप्युपलक्षणम् ।

ब्राह्मे मुहूर्ते या निद्रा सा पुण्यक्षयकारिणी ।
तां करोति तु यो मोहात् पादकृच्छ्रेण शुध्यति ॥

२ ब्राह्ममुहूर्तकाल उक्तश्चन्द्रिकायाम् —

सूर्यस्योदयतः पूर्वो मुहूर्तो रौद्र उच्यते ।
ब्राह्मो मुहूर्तस्तत्पूर्वो मुहूर्तो घटिकाद्वयम् ॥ इति ।

तत्र कर्तव्यमुक्तं स्मृत्यर्थसारे —

तत्रोत्थाय द्विराचम्य नमस्कृत्येष्टदेवताः
नामान्युच्चारयेदुच्चैस्ततो गच्छेज्जलाशयम् ॥ इति ।

३ तत्र दृश्यादृश्यत्वविवेकमाह कात्यायनः —

श्रोत्रियं सुभगं गाञ्च ह्यग्निमग्निचितन्तथा ।
प्रातरुत्थाय यः पश्येदापद्भ्यस्स प्रमुच्यते ॥
पापिष्ठन्दुर्भगम्मत्तन्नग्नमुत्कृत्तनासिकम् ।
प्रातरुत्थाय यः पश्येत्तत्कालेरूपलक्षणम् ॥ इति ।

नग्नं अबालकन्नग्नमित्यर्थः । ग्नाः छन्दांसि यस्य न सन्ति स वा नग्नः ।

४ अथ मलमूत्रोत्सर्जनविधिः ।

तत्राङ्गिरसाः —

उत्थाय पश्चिमे यामे रात्रेराचम्य चोदकम् ।
अन्तर्धाय तृणैर्भूमिं शिरः प्रावृत्य वाससा ॥
वाचन्नियम्य यत्नेन ष्ठीवनोच्छ्वासवर्जितः ।
कुर्यान्मूत्रपुरीषे तु शुचौ देशे समाहितः ॥ इति ।

आपस्तंबोऽपि—

दूरादापथान्मूत्रपुरीषे कुर्याद्दक्षिणान्दिशन्दक्षिणापरां वेति । गत्वेति शेषः ।

मनुरपि—

तिरस्कृत्योच्चरेत्काष्ठं लोष्टं पत्रं तृणानिवेति । उच्चरेत् पुरीषोत्सर्जनं कुर्यादित्यर्थः ।

तत्र हारीतः—

अप्रावृतशिरा यस्तु विण्मूत्रं सृजति द्विजः ।
तच्छिरश्शतधा भूयादिति वेदाश्शपन्ति तम् । इति

तत्र याज्ञवल्क्यः —

दिवासन्ध्यासु कर्णस्थं ब्रह्मसूत्र उदङ्मुखः ।
कुर्यान्मूत्रपुरीषे तु रात्रौ चेद्दक्षिणामुखः ।। इति

भरद्वाजोऽपि—

चण्डालैरन्त्यजैरुक्तो मलमूत्रविसर्जने ।
दक्षिणश्रवणे विप्रो ब्रह्मसूत्रं विनिक्षिपेत् ।। इति

कर्णे उपवीतधारणमेकवस्त्रीविषयमिति सुमन्तुसाङ्ख्यायनौ ।

सर्वथा धार्यमिति स्मृत्यन्तरे—

मलमूत्रं त्यजेद्यस्तु विस्मृत्यैवोपवीतधृक् ।
तत्सूत्रन्तु परित्यज्य दध्यादन्यत्पुनर्नवम् ।। इति

तत्राङ्गिराः —

प्रत्यादित्यन्नमेहेत न पश्येदात्मनश्शकृत् ।
दृष्टवा सूर्यन्निरीक्षेत गामग्निं ब्राह्मणन्तथा ।। इति ।

नमेहेत — मूत्रपुरीषोत्सर्जनन्न कुर्यादित्यर्थः ।

मनुरपि—

न मूत्रं पथि कुर्वीत न भस्मनि न गोव्रजे ।
वध्याग्नि विप्रमादित्यमपः पश्यंस्तथैव गाम् ।।
न कदाचन कुर्वीत विण्मूत्रस्य विसर्जनम् ।। इति ।

५ अथ शौचविधिः ।

स्मृत्यन्तरे—

अथापनोद्य विण्मूत्रं लोष्ठकाष्ठतृणादिना ।
उदस्तवासा उत्तिष्ठेत् दृढं विधृतमेहन ।। इति ।

मेहनं शिश्नं मार्जनं वामहस्तेनेति व्यासः ।
उत्थाय वामहस्तेन गृहीत्वाध्वनि मेहना-इति ।

स्मृत्यन्तरे देवलोऽपि—

आशौचान्नोत्सृजेच्छिश्नं विस्रापोच्चारयोरपि ।
गुदं हस्तं च निर्मृज्यात् मृदम्भोभिर्मुहुर्मुहुः । इति

याज्ञवल्क्योऽपि—

गृहीतशिश्नांश्चोत्थाय मृद्भिरभ्युद्धृतैर्जलैः ।
गन्धलेपक्षयकरं शौचं कुर्यादतन्द्रितः ॥ इति ।

यमः —

आहरेन्मृत्तिकां प्राज्ञः कूलात् ससिकतन्तु या ।
शुचौ देशे तु संग्राह्य शर्कराश्मविवर्जिता ॥ इति ।

संग्राह्य इत्यनेन विण्मूत्रोत्सर्जनात् पूर्वमेव मृत्तिकाग्रहणं कार्यमिति प्राप्तम् । तदेव स्पष्टमाह आश्वलायनः—

त्यागान्मूत्रपुरीषस्य पूर्वं गृह्णीत मृत्तिकां ॥ इति ।
आहृतामन्यशौचार्थमाददीत न मृत्तिकां । इति

स्मृत्यन्तरेऽपि ।

तत्र मरीचिः—

विप्रे शुक्लातु मृच्छौचे रक्ताक्षत्रे विधीयते ।
हरिद्रवर्णा वैश्यस्य कृष्णा स्त्रीशूद्रयोस्तथा ॥ इति ।

यथोक्तमृत्तिकाया अलाभे मनुराह—

यस्मिन्देशे तु यत्तोयं या च तत्रैव मृत्तिका ।
सैव तत्र प्रशस्तस्यात्तया शौचं विधीयते ॥ इति ।

अनुद्धृतजलशौचमाह विवस्वान्—

रत्निमात्रजलं सक्त्वा कुर्याच्छौचमनुद्धृते ।
पश्चात्तच्छोधयेतीर्थमन्यथा ह्यशुचिर्भवेत् । इति ।

यमः—

पूर्वं जलेन प्रक्षाल्य मृदा पश्चात्ततोम्बुभिः
एवं द्वादशकृत्वस्तु गुदशौचं समाचरेत् ।

पञ्चकृत्वः करौ क्षाल्य मृदाऽमलकमात्रया ।
त्रिः कृत्वा लिङ्गशौचञ्च हस्तं क्षाल्य पदद्वयम् ।
संयोज्य त्रिर्मृदा क्षाल्य क्षालयेच्छौचमृत्स्थलम् । इति ।
न शुद्धिस्तु भवेत्तस्य मृत्तिकां यो न शोधयेत् ।

इति ऋष्यशृङ्गः ।

मरीचिरपि—

तिसृभिश्च तथा पादौ शोध्यौ गुल्फात्तथैव च ।
हस्तौ त्वामणिबन्धाच्च गन्धलेपापकर्षणम् । इति ।

शौचविधयो बहुधा दृश्यन्ते । तेष्वेकप्रकारोऽत्र दर्शितः ।

तत्र देवलः —

यावत्तु शुद्धिं मन्येत तावच्छौचं विधीयते । इति ॥

न्यूनाधिकत्र कर्तव्यं शौचं शुद्धिमभीप्सतेति दक्षः । अस्य वचनस्य उक्तशौचसंख्यायाः पूर्वमेव गन्धलेपौ गतौ चेदपि उक्तसंख्याशौचं कर्तव्यमिति च उक्तसंख्याशौचे न गन्धलेपौ गतौ चेत् पुनः नाधिकशौचं कर्तव्यमिति चार्थः । तत्र मूत्रशौचमुक्तं शातातपेन-

एका लिङ्गे करे सव्ये तिस्रो द्वे हस्तयोर्द्वयोः ।
मूत्रशौचं समाख्यातं शुक्ले तु द्विगुणं भवेदिति ।

दक्षोऽपि—

लिङ्गे तु मृत्समाख्याता त्रिपर्वा पूर्यते यदा ।
दातव्यमुदकन्तावन्मृदभावो यदा भवेद् । इति ।

व्यासोऽपि—

विट् छौचं प्रथमं कुर्यान्मूत्रशौचमतः परम् ।
हस्तशौचन्ततः कुर्यात्पादशौचमतः परम् ॥ इति ।

६ तत्र बालादीनां भेदमाह पितामहः ।

न तावदुपनीयन्ते द्विजाश्शूद्रास्तथाङ्गनाः ।
गन्धलेपक्षयकरं शौचमेषां विधीयते ॥
प्रमाणं शौचसंख्याया न शिष्टैरुपदिश्यते ॥ इति ।

७ तत्र बौधायनः —

कालन्देशन्तथात्मानं द्रव्यं द्रव्यप्रयोजनम् ।
उपपत्तिमवस्थाञ्च ज्ञात्वा शौचं प्रकल्पयेत् ॥ इति ।

एतद्वचनम् सर्वशुद्धिविषयम् ।

८ अथ गण्डूषविधिः ।

तत्र पराशरः —

कृत्वाथ शौचं प्रक्षाल्य पादौ हस्तौ च मृज्जलैः ।
निबद्धशिखकक्ष्यस्तु गण्डूषाचमनं चरेत् ॥ इति ।

व्यासोऽपि—

अपां द्वादशगण्डूषान् पुरीषोत्सर्जने द्विजः ।
मूत्रे च चतुरः कुर्याद् भोजनान्ते तु षोडश ॥ इति ।

स्मृत्यन्तरे तु—

पुरतस्सर्वदेवाश्च दक्षिणे पितरस्तथा ।
पश्चिमे ऋषयस्सर्वे वामे गण्डूषमुत्सृजेत् ॥ इति ।
आसीन एव गण्डूषान् वामभागे विसर्जयेत् । इति
स्मृतिसारोऽपि ।

९ अथाचमनविधिः ।

पराशरः —

कृत्वाथ शौचं प्रक्षाल्य पादौ हस्तौ च मृज्जलैः ।
कृत्वोपवीतं सव्यांसे वाङ्मनः कायसंयतः ।
निबद्धशिखकच्छस्तु द्विज आचममाचरेत् ॥ इति ।

व्यासोऽपि—

प्रक्षाल्य पादौ हस्तौ च मुखमद्भिस्समाहितः ।
दक्षिणं बाहुमुद्धृत्य कृत्वा जान्वन्तरे करौ ॥
आचम्य प्राङ्मुखः पश्चात् दन्तधावनमाचरेत् । इति ।

याज्ञवल्क्योऽपि—

अन्तर्जानुशुचौ देशे उपविष्ट उदङ्मुखः ।
प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत् । इति ।

उपस्पर्शनं आचमनम् ।

ऐशान्यभिमुखो भूत्वा द्विज आचमनं चरेत् । इति स्मृत्यन्तरेऽपि ॥

तत्र पूर्वाभिमुखाचमने किञ्चिद्दक्षिणाभिमुखत्वं वा उदङ्मुखाचमने किञ्चित् पश्चिमाभिमुखत्वं वा प्राप्नुयाच्चेत् महान् दोषो भविष्यतीत्यभिप्रायेण ऐशान्यभिमुख इत्युक्तम् । तदेव स्पष्टमुक्तं स्मृत्यन्तरे – आचान्तो दक्षिणास्यश्चेत्तज्जलं सुरया समम् । पश्चिमाभिमुखः कृत्वा न शुचिः स्यात् कदाचन । इति ।

स्मृतिप्रदीपिकायान्तु––

संहताङ्गुलिना तोयं गृहीत्वा पाणिना द्विजः ।
मुक्त्वाङ्गुष्ठकनिष्ठे तु शेषेणाचमनं चरेत् ॥ इति ।

व्यासोऽपि—

गोकर्णीकृतहस्तेन माषमग्नजलं पिबेत् ।
न न्यूनमधिकं पीत्वा सुरापानसमं भवेत् ॥ इति ।

भरद्वाजोऽपि—

माषमात्रास्तु संगृह्य त्रिः पिबेदपः ॥ इति ।

मनुरपि—

हृद्गाभि पूयते विप्रः कण्ठगाभिस्तु भूमिपः ।
वैश्योद्भिः प्राशिताभिस्तु शूद्रस्पृष्टाभिरन्तत । इति ।

भूमिपः क्षत्रिय इत्यर्थः । स्पृष्टाभिरन्तत इति वक्त्रे सन्निधान-मात्रेणेत्यर्थः ।

याज्ञवल्क्योऽपि—

शुध्येरन् स्त्री च शूद्रश्च सकृत् स्पृष्टाभिरन्ततः । इति ।

माषमज्जनमात्रा आपो हृदयङ्गमा भवन्तीत्युशनाः । तत्र शाखः —

अद्भिः समुद्धृताभिस्तु हीनाभिः फेनबुद्बुदैः ।
वह्निना च न तप्ताभिः रक्षाराभिरुपस्पृशेत् । इति ।

तत्र व्याघ्रपादः —

त्रिः पिबेद्दक्षिणेनाम्बु द्विरोष्ठौ परिमार्जयेत्
अङ्गुष्टमूलेन ततो मुखं वै समुपस्पृशेत् ॥
अङ्गुष्ठानामिकाभ्यान्तु स्पृशेन्नेत्रद्वयन्ततः ।
तर्जन्यङ्गुष्ठयोगेन स्पृशेन्नासापुटद्वयम् ॥

कनिष्ठाङ्गुष्ठयोगेन श्रवणे समुपस्पृशेत् ।
सर्वासामेवयोगेन हृदयन्तु तलेन वा ॥
संस्पृशेद्वौ शिरस्तद्वदङ्गुष्ठेनाथ वा द्वयम् ः। इति ।

स्मृत्यन्तरेऽपि—

ब्रह्मतीर्थेन अशब्दं कुर्वन् त्रिश्चतुर्वापः पीत्वा हस्तेन प्रक्षाल्य ओष्ठौ सङ्कोच्य अङ्गुष्ठमूलेन द्विः परिमृज्य संहताङ्गुलिभिरास्य सलोमप्रदेशे स्पृष्टवा प्राणादीनीन्द्रियाणि स्पृशेदिति । एवं द्विवारं कृत्वा एकमाचमनं भवति ।

तत्र माधवीये—

कण्ठं शिरोवा प्रावृत्य रथ्यापणगतोपि वा ।
अकृत्वा पादयोश्शौचमाचान्तोऽप्यशुचिः भवेत् ॥ इति ।

भृगुरपि—

सोष्णीषो बद्धपर्यङ्कःप्रौढपादश्च यो नरः ।
दुर्देशे प्रपदश्चैव नाचमन् शुद्धिमाप्नुयात् ॥ इति ।

पुलहोऽपि—

शिरः प्रावृत्य कण्ठं वा मुक्तकच्छशिखोऽपि वा ।
अकृत्वा पादयोश्शौचमाचान्तोऽप्यशुचिर्भवेत् ॥ इति ।

१० मुक्तकच्छो नग्नसमः । तथा स्मृत्यन्तरे—

अकच्छः पुच्छकच्छश्च तिर्यक्पुच्छोध्वपुच्छकौ ।
कटिसूत्रे बद्धकच्छो नग्नः पञ्चविधः स्मृतः ॥

कटिसूत्रं विना श्रौतं स्मार्तं कर्म करोति यः ।
सर्वन्तन्निष्फलं विद्यात् सोऽपि नग्न इति स्मृतः ॥ इति ।

तत्र स्मृतिरत्ने—

जानुभ्यामूर्ध्वमाचम्य जले तिष्ठन्नदुष्यतीति ॥

चन्द्रिकायान्तु—

जानुमात्रजलेतिष्ठन्नासीनः प्राङ्मुखस्थले ।
सम्मतश्शुचिराचान्त इति ॥

यमः —

उद्धृत्यवामहस्तेन यः पिबेत् ब्राह्मणो जलम् ।
सुरापानेन तत्तुल्यं मनुस्वायंभुवोऽब्रवीत् ॥ इति ।

एतदाचमनादि सर्वजलपानविषयञ्च । तत्र ब्राह्मादि तीर्थ-

लक्षणमाह मनुः —

अङ्गुष्ठमूलस्य तले ब्राह्मन्तीर्थं प्रचक्षते ।
कायमङ्गुलिमूलेऽग्रे दैव्यं पित्र्यं तयोरधः ॥
ब्राह्मेण विप्रस्तीर्थेन नित्यकालमुपस्पृशेत् ।
कायत्रैदशकाभ्यां वा न पित्र्येण कदाचन ॥ इति ।

कायं प्राजापत्यम् । त्रैदशकं दैवम् ।

व्यासोपि—

अङ्गुष्ठमूलान्तरतो रेखायां ब्राह्ममुच्यते ।
आन्तराङ्गुष्ठदेशिन्योः पितॄणां तीर्थमुच्यते ॥
कनिष्ठमूलतः पश्चात् प्राजापत्यं प्रचक्षते ।
अङ्गुल्यग्रे स्मृतं दैवं तद्वैकार्यं प्रचक्षते ॥

कनिष्ठामूलतोऽधस्ताद्रेखायां वाऽथ दैवतम् ।
ब्राह्मेणैव तु तीर्थेन द्विजो नित्यमुपस्पृशेत् ॥ इति ।

तत्र व्याघ्रपादः—

य एवं ब्राह्मणो नित्यमुपस्पर्शनमाचरेत् ।
ब्रह्मादि स्तम्बपर्यन्तं जगत्स परितर्पयेत् ॥ इति ।

स्मृतिचन्द्रिकायान्तु—

याः क्रियाः कुरुते मोहादनाचम्यैव नास्तिकः ।
भवन्ति हि वृथा तस्य क्रियास्सर्वा न संशयः ॥ इति ।

११ अथ दन्तधावनविधिः ।

तत्र भरद्वाजः—

प्रक्षाल्य चरणौ हस्तौ मुखञ्चाथ यथाविधिः ।
आचम्य प्राङ्मुखः स्थित्वा दन्तधावनमाचरेत् ॥ इति ।

मार्कण्डेयः—

सर्वे कण्टकिनः पुण्याः क्षीरिणश्च यशस्विनः ।
उदुंबरेण वाक्सिद्धि लभेत् प्लक्षेण वै धनम् ॥

अर्जुनेन निरोगत्वं वटेन महतीं श्रियम् ।
आपामार्गेण सर्वर्द्धि श्रीर्वश्यश्च प्रियङ्गुभिः ॥

वेणुना चाप्नुयाद् गावो राजवृक्षाज्जयं लभेत् ।
चूतेन नृपपूजा स्यात् सौभाग्यं पनसेन तु ॥

आरोग्यं कर्णिकारात्तु पारन्त्या शौर्यमुत्तमम् ।
खदिरादखिलान् कामान् लभेदतियशो महत् ॥

कार्पासं दन्तकाष्ठन्तु विष्णोरपि हरेच्छ्रियम् ।
वाग्यतो निर्मृजेद्दन्तादन्तमांसमपीडयन् ॥

जिह्वामलं समुदितं दन्तान्तरितमेव च ।
राक्षस्या मुद्रया काष्ठं राक्षस्यामुत्सृजेद्दिशि ॥

दन्तधावनकाष्ठन्तु येनोत्सृष्टन्तदन्ततः ।
समृष्टाहारमाप्नोति पतत्यभिमुखं यदि ॥ इति ।

व्यासोऽपि—

प्रक्षाल्य च शुचौ देशे दन्तधावनमुत्सृजेत् ।
पतितोऽभिमुखे सम्यक् भोज्यमाप्नोत्यभीप्सितम् । इति ॥

१२ तत्र विष्णुः-

प्रतिपत्पर्वषष्ठीषु चतुर्दश्यष्टमीषु च ।
नवम्यां भानुवारे च दन्तकाष्ठं विवर्जयेत् ॥ इति ।

व्यासोऽपि—

श्राद्धे यज्ञे च नियमे पत्यौ च प्रोषिते रवेः ।
वारे वाते च संक्रान्तौ नन्दभूताष्टपर्वसु ॥
तैलाभ्यंगं रतिं मासं दन्तकाष्ठञ्च वर्जयेत् । इति ।

भूतञ्चतुर्दशी ।

स्मृत्यन्तरे—

उपवासदिने यो वै दन्तधावनकृन्नरः ।
स याति नरकं घोरं व्याघ्रपक्षश्चतुर्युगम् ॥ इति ।
उपवासदिने श्राद्धे खादित्वा दन्तधावनम् ।
रौरवे नरके घोरे पितृभिस्सह मज्जति ॥

इत्यन्यत्र च ॥

१३ स्त्रीणां नित्यं कर्तव्यमित्याह मनुः ॥

पुष्पालङ्कारवस्त्राणि स्त्रियो धूपानुलेपनम् ।
उपवासेन दुष्यन्ति दन्तधावनमञ्जनम् ॥ इति ।

विष्णुरहस्ये—

अलाभे दन्तकाष्ठानां प्रतिषिद्धन्दिने तथा ।
अपान्द्वादशगण्डूषैर्मुखशुद्धिर्भविष्यति ॥ इति ।

१४ अथ स्नानविधिः ॥

कूर्मपुराणे—

प्रक्षाल्य दन्तकाष्ठं वै वर्जयित्वा विधानतः ।
आचम्य प्रयतो नित्यं प्रातस्नानं समाचरेत् । इति ।

शौनकः –

प्रातराचमनं कृत्वा शौचं कृत्वा यथोक्तवत् ।
दन्तशौचन्ततः कृत्वा प्रातस्नानं समाचरेत् ॥ ईति ।

याज्ञवल्क्योऽपि—

आगम्यागमनात्पापात् पापेभ्यश्चप्रतिग्रहात् ।
रहस्यचारितात्पापान्मुच्यते स्नानमाचरन् । इति ।

स्मृत्यर्थसारे तु—

संशोध्य दन्तानाचम्य विधिवत् स्नानमाचरेत् ।
स्नानमूलाः क्रियास्सर्वाः श्रुतिस्मृत्युदिता नृणाम्
अस्नातस्तुपुमान् नार्हो जपहोमदिकर्मसु ।
प्रातर्मध्याह्नयोस्नानं वानप्रस्थगृहस्थयोः ॥
यतेस्त्रिषपणं स्नानं सकृच्च ब्रह्मचारिणाम् ।
सर्वे वापि सकृत्स्नायादशक्तौ चोदकं विना ॥
स्नानन्तु सर्ववर्णानां कार्यं शौचपुरस्सरम् ॥ इति ।

विष्णुरपि—

स्नातोऽधिकारी भवति दैवे पित्र्ये च कर्मणि ।
पवित्राणान्तथा जप्ये दाने च विधिचोदिते ॥ इति ।

अत्रिस्तु—

अस्नाताशी मलं भुङ्क्ते ह्यजपः पूयशोणितम् ।
अहुताशी कृमिं भुङ्क्ते ह्यदाता विषमश्नुते ॥ इति ।

तत्र मनुः—

नदीषु देवखातेषु तटाकेषु सरस्सु च ।
स्नानं समाचरेन्नित्यं गर्तप्रस्रवणेषु च ।। इति ।

१५ चन्द्रिकायान्तु—

नद्यान्तु विद्यमानायां न स्नायादन्यवारिषु ।
न स्नायादल्पतोयेषु विद्यमाने बहूदके ।। इति । —
न स्नायादुदपानेषु स्नात्वा कृच्छ्रं समाचरेत् ।। इति ।

वृद्धमनुः । गोमहिषादीनां पानार्थंशिलादि निर्मितपात्रेषु परिपूरितं जलं उदपानम् ।।

कात्यायनोऽपि—

याश्शोषमुपगच्छन्ती ग्रीष्मे कुसरितो भुवि ।
तासु प्रावृषिन स्नायादपूर्णे दशवासरे ।।
दशरात्रेण शुद्धयन्ति भूमिष्ठञ्च नवोदकम् ।। इति ।

गौतमः—

शिवलिङ्गसमीपे तु यत्तोयं पुरतस्थितम् ।
शिवगङ्गेति विज्ञेया तत्र स्नात्वा दिवं व्रजेत् ।।
जलंशुद्धमशुद्धं वा विष्णुवास्तुसमीपतः ।
विष्णुगङ्गासमन्तोयं महापातकनाशनम् ।। इति ।

उष्णोदकस्नानमातुरविषयम् ।।

१६ शाण्डिल्यः —

न स्नायात् सहशूद्रेण न स्त्रीभिर्नचनास्तिकैः ।
न पाषण्डैश्च न बालैश्च न रोगा शुचिभिर्नरैः । इति ।

बोधायनोऽपि—

नद्यां रजकतीर्थन्तु दशहस्तेन वर्जयेत् ।
स्नानं रजकतीर्थेतु भोजनं गणिकागृहे ।।
पश्चिमोत्तरशायित्वं शक्रादपि हरेच्छ्रियम् ।। इति ।

स एवाह—

जलावगाहनं स्नानं वारुणं सार्ववर्णिकम् ।
मन्त्रवत्प्रोक्षणञ्चापि द्विजातीनां विशिष्यते ॥ इति ।

१७ स्मृतिसारोऽपि—

जले निमग्न उन्मज्य तीरस्थस्समुपस्पृशेत् ।
ततस्समार्जयेच्छीर्ष्णि दैवतीर्थेन वा कुशैः ॥
आपोहिष्ठेति तिसृभिर्यथावादनुपूर्वशः ।
अर्धर्चशान्ते ऋगन्ते वा पादान्तेवाथमार्जयेत् ॥

१८ ततोऽम्भासि निमग्नस्सन् त्रिः पठेदघमर्षणम् ।
प्रदध्यान्मूर्धनि तथा महाव्याहृतिभिर्जलम् ॥ इति ।

त्रिः पठेन्मनसेति शेषः ।

ऋग्विधानेऽपि—

निमज्य सलिले विप्रस्त्रिः पठेदघमर्षणम् ।
यथाश्वमेधेऽवभृथन्तादृशम्मनुरब्रवीत् ॥ इति ।
मनसा ध्यानमेतत्तु मन्यते शौनकस्त्वृषिरित्यन्यत्र च ।

याज्ञवल्क्यः—

ऋषिच्छन्दोदेवतास्मरणपूर्वकम् आपोहिष्ठादि तृचास्यादितस्सप्तभिः पादैरूर्ध्वं सप्तविप्रुष उत्क्षिप्य अष्टमेनैकां विप्रुषमधश्शरीरे निक्षिप्य नवमेनैकां विप्रुषमूर्ध्वमुत्क्षिपेदिति ।

शौनकोऽपि—

नव प्रणवयुक्तेन अपोहिष्ठतृचेन तु ।
संवत्सरकृतं पापं प्रोक्षणादेव नश्यति ॥ इति ।

एतद्वचनमपि पादान्तप्रोक्षणाभिप्रायम् । एतत्सर्वं प्रायश्चित्तविषयमार्जनम् । नित्यकर्मसु ऋगन्त एव मार्जनं कार्यमित्युक्तम् ।

स्मृत्यर्थसारे—

आपोहीति तृचैकैकमुल्लेख्यं त्रिपुकारयेत्
चतुर्थं कारयेद्यस्तु ब्रह्महत्यां बिभर्ति सः ॥ इति ।

उल्लेख्यं मार्जनम् ।

अथाङ्गं मार्जयेत्सम्यक् शिरश्चाप्यन्यवाससा ।
स्नानवस्त्रेण हस्तेन यो द्विजोऽङ्गं प्रमार्जयेत् ॥
वृथा भवति तत्स्नानं पुनस्नानेन शुध्यति ॥

इति संवर्तः । तथैव व्यासश्च ।

तत्र स्मृतिरत्ने—

तत आचम्य विधिवत् वसित्वाधौ तमम्बरम् ।
द्विराचम्याथ संप्रोक्ष्य तृचेनाब्दैव तेन च ॥
स्व स्व गृह्योक्तमार्गेण सन्ध्यावन्दनमाचरेत् ॥ इति ।

तत्र शंखः —

विना यज्ञोपवीतेन विना धौतेन वाससा ।
मुक्त्वा शिखां विना चाङ्कः कृत्वा कर्म पुनश्चरेत् ॥ इति ।

१६ अथ सन्ध्यावन्दनविधिः —

तत्र दक्षः —

अहोरात्रस्य या सन्धिः सूर्यनक्षत्रवर्जिता ।
सा तु सन्ध्या समाख्याता मुनिभिस्तत्त्वदर्शिभिः ॥ इति ।

पितामहोऽपि—

नक्षत्रजोतिरारभ्य सूर्यस्योदयदर्शनात् ।
प्रातस्सन्ध्येति तामाहुः श्रुतयो मुनिसत्तमा ॥ इति ।

याज्ञवल्क्योऽपि—

सन्धौ सन्ध्यामुपासीत नास्तगेनोद्गते रवौ
ब्रह्मणोपास्यते सन्ध्या विष्णुना शङ्करेण च ॥
कस्मान्नोपासयेद्देवीं श्रेयस्कामो द्विजोत्तमः ॥ इति ।

शंखोऽपि—

प्रातस्सन्ध्यां सनक्षत्रां मध्यमां स्नानकर्मणि ।
सादित्यां पश्चिमां सन्ध्यामुपासीत यथाविधिः ॥

इति । स्नानकर्मणि – माध्यन्दिनस्नानानन्तरमित्यर्थः ।

२० संवर्तोऽपि—

प्रातस्सन्ध्यां सनक्षत्रां उपासीतयथाविधिः ।
सादित्यां पश्चिमां सन्ध्यामर्धास्तमितभास्कराम् ॥

उत्तमा तु सनक्षत्राम्मध्यमा लुप्ततारकाम् ।
अधमा तारकोपेता सायं सन्ध्यात्रिधामतेति ॥

प्रातस्सूर्यसहितेति च सायं तारकोपेतेति च गौणकालः । अधमा सूर्यसहिता प्रातस्सन्ध्या त्रिधा मता । उत्तमा सूर्यसहिता मध्यमा सूर्यवर्जिता । तत्र सायंसन्ध्यावन्दनस्य सादित्यां पश्चिमां सन्ध्यां-इति सूर्यसहितत्वोक्तेः अर्धास्तमित भास्करामिति संवर्तस्मरणेन कालो व्यवस्थापित एव । प्रातस्सनक्षत्रेति नक्षत्र सहितत्वोक्तेः कालो दक्षादिभिर्व्यवस्थापित एव ।

विवस्वदुदया दर्वाक् प्रहरार्धं तथोपरि ।
सन्ध्याकालस्सविज्ञेयो ह्यन्यथालङ्घनं स्मृतम् ॥ इति ।

दक्षगर्ग बोधायनादि स्मरणानि । प्रहरो यामः । एतदेव प्रकारान्तरेण स्पष्टमुक्तं स्मृत्यन्तेर ।

ईषद्रवि प्राच्यां यदा पश्येत्तदादितः ।
दर्शनाद्रविरेखायास्सन्ध्याकालः प्रकीर्तितः ॥ इति ।

तत्र व्यास —

कराभ्यान्तोयमादाय गायत्र्याचाभिमन्त्रितम् ।
आदित्याभिमुखस्तिष्ठन् त्रिरूर्ध्वमथचोत्क्षिपेत् ॥ इति ।

गायत्र्या चेति–च शब्दोऽनुक्त समुच्चयार्थः ।
प्रणवव्याहृतीभिर्गायत्र्या चेति योजनीयम् ।

शंखोपि—

सूर्यायैव तु गायत्र्या त्रिसन्ध्यासु जलं क्षिपेत् ।
प्रातर्मध्याह्नयोस्तिष्ठन् ध्यायेत्सन्ध्यां समाहित ॥ इति ।

स्मृत्यर्थसारेऽपि—

अथ द्विराचम्य आपोहिष्ठेति तृचेन संप्रोक्ष्य शुद्धजलपूर्णाञ्जलिमादाय प्रणवव्याहृतिपूर्वया गायत्र्याभिमन्त्र्य त्रिरूर्ध्वं विक्षिपेत् इति ॥ प्रागीशोदङ्मुखो वापि सन्ध्यावन्दनमाचरेदिति नारायणः ॥

ब्रह्मापि—

धाराच्युतेन तोयेन सन्ध्योपास्तिर्विगर्हिता ।
न प्रशंसन्ति पितरो न प्रशंसन्ति देवताः ॥
जले त्वर्घ्य प्रदातव्यं जलाभावे शुचिस्थले ।
संप्रोक्ष्य वारिणा सम्यक् ततोर्घ्याणि प्रकल्पयेत् ॥
एकं वाहननाशाय एकं शस्त्रास्त्रनाशनम् ।
मन्देहानां वधायैकं अर्घ्यत्रयमुदाहृतम् ॥ इति ।

स्मृतिसारे ।—

ततः प्रदक्षिणं कृत्वा सजलेन करेण तु ।
देवानृषीन् पितृंश्चैव स्व स्व तीर्थेन तर्पयेत् ॥ इति ।

व्याघ्रपादः ॥

स्नाने चैव तु सर्वत्र तर्पयेत्पितृदेवताः । इति ।

कार्ष्णाजिनिरपि ॥

देवान्देवगणांश्चापि ऋषीनृषिगणांस्तथा ।
पितॄन् पितृगणांश्चापि नित्यं सन्तर्पयेत्ततः । इति ।

व्यास: ॥

यज्ञोपवीति देवानां निवीती ऋषितर्पणे ।
प्राचीनवीती पित्र्येषु स्वेन तीर्थेन तर्पयेत् । इति ।

वृद्धमनुरपि ॥

मानुष्येष्वंसयोस्सक्तं मैथुने पृष्ठभागिकम्
तर्पणेऽङ्गुष्ठयोस्सक्तं निवीतं त्रिविध स्मृतम् । इति ।
अञ्जलौ जलमापूर्य जप्त्वा मन्त्रं समाहितः ।
गोश्रृङ्गमात्रमुद्धृत्य तर्पणे जलमुत्सृजेत् ॥
इति भरद्वाजः ।

२२ स्मृत्यन्तरे—

यथोक्तन्तर्पयित्वाथ वस्त्रं संपीडयेत् स्थले । इति ।

शौनकः—

निष्पीडयति यः पूर्वं स्नानवस्त्रन्तु तर्पणात् ।
निराशाः पितरस्तस्य यान्ति देवास्सहर्षिभिः ॥ इति ।

स्मृतिरत्ने—

स्नानार्थमभिगच्छन्तं देवाः पितृगणैस्सह ।
वायुभूतास्तु गच्छन्ति तृष्णार्थास्सलिलार्थिनः ॥
निराशास्ते निवर्तन्ते वस्त्रनिष्पीडने कृते ।
अमन्त्रतस्ततस्तेभ्यस्समन्त्रंपीडयेत् स्थले ॥ इति

स्मृत्यन्तरेपि—

चतुस्संवेष्ट्य वासोन्तस्स्नातो निष्पीडयेत् स्थले ।
ये के चास्मत्कुले जाता इति मन्त्रेण मानवः ॥ इति ।

मन्त्रमाह कार्ष्णाजिनिः —

ये के चास्मत्कुले जाता अपुत्रा गोत्रिणो मृताः ।
ते गृह्णन्तु मया दत्तं वस्त्रनिष्पीडितोदकम् ॥ इति ।

स्मृतिप्रदीपिकायान्तु—

वस्त्रं चतुर्गुणीकृत्य संपीड्य च जलात् बहिः ।
वामप्रकोष्ठे निक्षिप्य द्विराचम्य विशुद्ध्यति ॥ इति ।

जाबालिरपि—

निष्पीडितन्धौतवस्त्रं यदा स्कन्धे विनिक्षिपेत्
तदासुरं भवेत्कर्म पुनस्नानं विशोधनम् ॥ इति ।

सन्ध्यावन्दनं प्रशंसति यमः ।

सन्ध्यामुपासते ये तु सततं संशितव्रताः ।
विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम् ॥
यदह्ना कुरुते पापं कर्मणा मनसा गिरा ।
आसीनां पश्चिमांसन्ध्यां प्राणायामैस्तु हन्ति तत्
यद्रात्र्या कुरुते पापं कर्मणा मनसा गिरा ।
प्रातस्सन्ध्यामुपासीनः प्राणायामैर्व्यपोहति ॥ इति ।
सन्ध्यामुपासीनः— सन्ध्योपासनंकृत्वेत्यर्थः ॥

२३ सन्ध्याकालातिक्रमे प्रत्यपायमाह मनुः —
यस्सन्ध्यां कालतः प्राप्तामालस्यादनिवर्तते ।
सूर्यहत्यामवाप्नोति उलूकत्वमियात्ततः ॥ इति ।

स्मृत्यन्तरे—

कामान्मोहाद्भयाल्लोभात् सन्ध्यायात्तिक्रमेद्विजः ।
सन्ध्यातिक्रमणाद्विप्रो ब्राह्मणात् पतते यतः ॥ इति

योगयाज्ञवल्क्योऽपि

त्रिंशत्कोट्यस्तु विख्याता मन्देहा नाम राक्षसाः ।
प्राद्रवन्ति सहस्रांशुमुदयन्ति दिने दिने ॥
अहन्यहानि ते सर्वे सूर्यमिच्छन्ति खादितुम् ।
अथ सूर्यस्य तेषाञ्च युद्धमासीत् सुदारुणम् ॥

ततो देवगणास्सर्वे ऋषयश्च तपोधनाः ।
सन्ध्यो सन्ध्यामुपासीना यत्क्षिपन्त्यन्वहं जलं ॥
ब्रह्माव्याहृतिसंयुक्तं गायत्र्या चाभिमन्त्रितम् ।
तेन दह्यन्ति ते दैत्या वज्रीभूतेन वारिणा ॥
एतद्विदित्वा यस्सन्ध्यामुपास्ते संशितव्रतः ।
दीर्घमायुस्सविन्देत सर्वपापैः प्रमुच्यते ॥
यस्तु तां केवलां सन्ध्यामुपासीत सपुण्यभाक्
ताम्परित्यज्य कर्माणि कुर्वन् प्राप्नोति किल्बिषम् ।
सहन्ति सूर्यं सन्ध्यायां नोपास्ति कुरुते तु यः ।
ये हिंसन्ति सदा सूर्यं मोक्षद्वारमनुत्तमम् ॥ इति ।

व्यासोऽपि–

योऽन्यत्र कुरुते कर्म धर्मकार्येऽपि वै द्विजः ।
विहाय सन्ध्याप्रणतिं नरकायैव कल्पते ॥ इति ।

सूर्योदयात्परं गौणकालोऽस्तीति सर्वदा सूर्यसहितं प्रातस्सन्ध्योपासनं न कर्तव्यमित्याह स्मृत्यन्तरे—

यस्सूर्यसहितां सन्ध्यां सदा कुर्वीत मोहतः ।
न तस्य विद्यते सन्ध्या सर्वकर्मबहिष्कृतः ॥
विधिनापि कृता सन्ध्या कालातीताऽफला भवेत् ।
अयमेव हि दृष्टान्तो वन्ध्यास्त्रीमैथुने यथा ॥
अकाले चेत् कृतं कर्म कालं प्राप्य पुनश्चरेत् ।
कालातीतन्तु यत्कुर्यात् अकृतन्तद्विनिर्दिशेत् ॥

इति । अकालं – उक्तकालात् पूर्वमित्यर्थः ॥

सन्ध्यावन्दनस्य मुख्यकालातिक्रमे प्रायश्चित्तमाह संवर्तः —

अपः प्रादानतः पूर्वमुदयेऽस्तमयेऽपि वा ।
गायत्र्यष्टशतं जप्यं प्रायश्चित्तं द्विजातिभिः ॥

इति । अष्टशतमष्टोत्तरशतमित्यर्थः ।

यदादीध्ये जपेन्मन्त्रन्दशवारन्दिने दिने ।
अकाले नित्यकर्माणि काले तानि कृतानि वै ॥ इति ।

गौणकालातिक्रमे प्रायश्चित्तमाह बौधायनः – सायमतिक्रमे रात्र्युपवासः । प्रातरतिक्रमे अहन्युपवासः । इति ।

एतदबुद्धिपूर्वविषयम् । बुद्धिपूर्वे तु

वेदोदितानां नित्यानां कर्मणां समतिक्रमे ।
स्नातकव्रतलोपे च प्रायश्चित्तं अभोजनमिति ।

संवर्तोऽपि—

उपासीत न चेत्सन्ध्यामग्निकार्यन्नचेत्कृतम् ।
गायत्र्यष्टसहस्रन्तु जपं कृत्वा विशुद्ध्यति ॥

इति । अष्टसहस्रं–अष्टोत्तरसहस्रमित्यर्थः । उपासीत न चेत्सन्ध्यामित्यत्र गौणकाले अपि. सन्ध्यावन्दनं न कृतञ्चेदित्यर्थः । न केवलं सन्ध्यापरित्यागः । सन्ध्यापरित्यागे वाऽतीत्यस्मरणबाहुल्यात् ।

तथा स्मृत्यन्तरे—

नास्तिक्यादथवा मोहाद्यस्तु सन्ध्यां परित्यजेत् ।
स जीवन्नेव चण्डालो भवत्येव न संशयः ॥

इत्यादि बहुस्मरणदर्शनादेतस्त्पष्टीकरोति ।

शातातपः —

सन्ध्यातिक्रमणे यस्य सप्तरात्रं गमिष्यति ।
उन्मत्तदोषयुक्तोऽपि पुनस्संस्कारमर्हति ॥ इति ।

शंखोऽपि—

सन्ध्यादि नित्यलोपे तु दिनमेकमभोजनम् ।
दिनद्वये त्रिरात्रं स्यात् कृच्छ्रार्धन्तु दिनत्रये ॥

दशाहे कृच्छ्रमेकं स्यादूर्ध्वं चान्द्रायणं चरेत् ।
चान्द्रायणं पराकश्च मासादूर्ध्वं विधीयते ॥
ततोप्येवं प्रकल्प्य स्याद्व्यासस्य वचनं यथा ॥ इति ।

अत्र सन्ध्यादि नित्यलोपे इति । लोपशब्दस्यापि पूर्वोक्त एवार्थः । वेदोदितानां नित्यकर्मणामतिक्रमे एव दिनमेकमभोजनमिति बौधायनस्मरणात् ॥

२४ विष्णुस्तु—

जलाभावे महामार्गे बन्धनेस्त्वशुचावपि ।
उभयोस्सन्ध्ययोश्चापि रजसाऽप्यर्घ्यमुत्क्षिपेत् ॥ इति ।

अत्रिरपि—

सूतके मृतके चैव सन्ध्याकर्म न सन्त्यजेत् ।
मनसोच्चारयेन्मन्त्रान् प्राणायाममृते द्विजः ॥

इति तत्र अस्वतन्त्रतया रजसाऽप्यर्घ्यं कर्तुम् असंगतश्चेत् सन्ध्ययोस्सूर्यम्मनसा ध्यायेदिति स्मृत्यन्तरे ॥

२५ अथ सन्ध्यावन्दनदेशविभाग उक्तो व्यासेन ।

गृहे त्वेकगुणा सन्ध्या गोष्ठं दशगुणा स्मृता ।
शतसाहस्रका नद्यामनन्ता विष्णुसन्निधौ ॥ इति ।

शातातपोऽपि—

अनृतं मद्यगन्धश्च दिवा मैथुनमेव च ।
पुनाति वृषलस्यान्नं बहिस्सन्ध्यामुपासते ॥ इति ।

अथ जपस्थानमाह याज्ञवल्क्यः —

अग्न्यागारे जलान्ते वा जले देवालयेऽपि वा ।
पुण्यतीर्थे गवां गोष्ठे सिद्धक्षेत्रेऽथवा गृहे ॥

जपेदिति ।

स्मृतिसारे—

सूर्यस्याग्ने गुरोरिन्दोर्दर्भस्य च कुशस्य च ।
विप्राणाञ्च गवाञ्चैव सन्निधौ शस्यते जपः ॥
अश्वत्थबिल्वतुलसीपुष्पवानवृते । इति ।

शंखः —

गृहत्वेकगुणं प्रोक्तं नद्यादौ द्विगुणं स्मृतम् ।
गवां गोष्ठे दशगुणं अग्न्यागारे शताधिकम् ॥
सिद्धक्षेत्रेषु तीर्थेषु देवतानाञ्च सन्निधौ ।
सहस्रशतकोटीनामनन्तं विष्णुसन्निधौ ॥ इति ।

२६ अथासनफलभेद उक्त स्मृत्यन्तरे—

कुशाजिनाम्बरेणाग्र्यं कल्पयेदासनं बुधः ।
वंशेष्टकाश्मधरणी तृणपल्लवनिर्मितम् ॥
वर्जयेदासनं धीमान् दारिद्र्यव्याधिदुःखदम् ।
सर्वसिद्ध्यै व्याघ्रचर्म ज्ञानसिद्ध्यै मृगाजिनम् ॥
नादीक्षितस्य गृहिणः कृष्णसाराजिनं स्मृतम् ।
वस्त्रासनं रोमहरं कम्बलं दुःखनाशनम् ॥ इति ।

शौनकः —

कृष्णाजिने ज्ञानसिद्धिः मोक्षश्रीर्व्याघ्रचर्मणि ।
सर्वसिद्धिकरं चित्रकम्बलं श्रीकरं परम् ॥

इति स्मृत्यन्तरे—

अथ जपे स्थितिलक्षणमाह शौनकः —

वीरासनं स्वस्तिकं वा बद्ध्वान्यतरदासनम् ।
पद्मं वा मुक्तकं वापि बध्वा जपमथाचरेत् ॥
एकं पादमथैकस्मिन् विन्यस्योरौ तु संस्थितः ।
पादेन्यस्मिस्तथा चोरुं वीरासनमुदाहृतम् ॥

जान्वोरभ्यन्तरे सम्यक् कृत्वा पादतले उभे ।
ऋजुकायस्समासीन स्वस्तिकं तत्प्रचक्षते ॥

ऊर्वोरुपरि विप्रेन्द्रः कृत्वा पादतलं उभे ।
पद्मासनं वदेदेतत् सर्वेषामपि पूजितम् ॥

संपीड्य सुवनं सूक्ष्मां गुल्फेनैव तु सव्यतः ।
सव्यन्दक्षिणगुल्फेन मुक्तासनमुदीरितम् ॥ इति ।

२७ अथ सन्ध्यावन्दनानन्तरं जपविधिः

तत्र स्मृत्यन्तरे—

अर्घ्यं कृत्वाथ विधिवत् तर्पयित्वा विधानतः ।
आचम्य प्राङ्मुखो भूत्वा वाग्यतो जपमाचरेत् ॥

पूर्वन्तु प्रणवञ्जप्त्वा सहस्रं शतमेव वा ।
दशप्रणवमभ्यस्य गायत्रीं प्रयतो जपेत् ॥

प्रणवस्य ऋषिर्ब्रह्माप्रजापतिरुदीरितः ।
छन्दस्तु दैवीगायत्री परमात्मा तु देवता ॥

विश्वामित्र ऋषिः प्रोक्तो गायत्री छन्द उच्यते ।
देवता सवितैव स्यात् गायत्र्या कथितो बुधैः ॥

ऋष्यादिकं विना मन्त्रं यज्जप्तं तत्तु निष्फलम् ।
नरकञ्चसमाप्नोति तस्मादृष्यादिकं स्मरेत् ॥ इति ।

तत्र गायत्रीजपविधिमाह स्मृतिरत्नावल्याम्—

संपुटैका षडोंकारा गायत्री त्रिविधा मता ।
तत्रैकप्रणवा ग्राह्या गृहस्थैर्जपकर्मणि ॥

गृहस्थवत्तु जप्तव्या सदैव ब्रह्मचारिभिः ॥
संपुटा च षडोङ्कारा भवेतामूर्ध्वरेतसाम् ॥ इति ।

संपुटा – आद्यन्तप्रणवा । एका – आदिप्रणवा । आदौ व्याहृतिभ्यः पूर्वं प्रणवं जप्यमित्यर्थः ।

स्मृतिसारसमुच्चयेऽपि—

गृहस्थो ब्रह्मचारी च प्रणवाद्यामिमां जपेत् ।
अन्ते यः प्रणवं कुर्यान्न संवृद्धिमवाप्नुयात् ॥ इति ।

विश्वामित्रः—

जपप्रशस्ता सावित्री प्रणवेन समन्विता इति ॥

संवर्तोऽपि—

प्रणवाद्यान्तु सन्ध्यायां जपेद्व्याहृतिभिस्सह । इति ।

पितामहोऽपि—

प्रणवं व्याहृतीस्तिस्रो गायत्रीं च जपेत् क्रमात्
प्रणवव्याहृतीयुक्ता स्वाहान्ता होमकर्मणि
शुद्धा वात्र प्रयोक्तव्या व्याहृतिः प्रणवैर्विना ॥ इति ।

२८ तत्र व्यासः ।

त्रिसन्ध्यासु जपेद्देवीं विच्छिद्यैव पदत्रयम् ।
अविच्छिन्नां जपेद्यस्तु रौरवन्नरकं व्रजेत् ॥ इति ।

देवीं गायत्रीं । पदशब्दः पादार्थः ॥

विष्णुरपि—

अछिन्नपादा गायत्री ब्रह्महत्यां प्रयच्छति ।
छिन्नपादा तु गायत्री ब्रह्महत्यां व्यपोहति ॥
तस्मात् पादत्रयं छित्वा जपयज्ञं समाचरेत् । इति ।

स्मृतिरत्नावल्यामपि—

अछिन्नपादगायत्र्या जपं कुर्वन्ति ये द्विजाः ।
अधोमुखास्ते तिष्ठन्ति कल्पकोटि शतान्यपि ॥ इति ।

२९ तत्र स्मृत्यन्तरे—

त्रिविधो जपयज्ञस्यान्मानसोपांशुवाचिकः ।
परश्रावणयोग्यो यस्सवाचिक उदाहृतः ॥

३० उपांशुरोष्ठसंस्पर्शमात्रस्स्वश्रुतिगोचरः ।
यो जपेदचलज्जिह्वो दर्शनावरणेन च ।
स मानसस्समाख्यातो जपश्रुतिविभूषणैः ॥ इति ।

विश्वामित्रस्तु—

धियायदक्षरश्रेण्या वर्णाद्वर्णं पदात्पदम् ।
मन्त्रार्थचिन्तनं भूयः कथ्यते मानसो जपः ॥ इति ।

स्मृत्यन्तरे—

उत्तमं मानसं जप्यं उपांशुर्मध्यमं स्मृतम् ।
अधमं वाचिकं प्रोक्तं सर्वमन्त्रेषु वै द्विजाः ॥
वाचिकस्यैकमेकस्य उपांशोश्शतमुच्यते ।
सहस्रं मानसं प्रोक्तम् ॥ इति ।

मानसस्सिद्धिकामानां पुष्टिकामैरुपांशुकः ।
वाचिको मारणे चैव प्रशस्तो जप ईरितः ॥

इत्यन्यत्र च ।

शंखः —

३१ स्वरवर्णपदैर्वाक्यं शुद्धमावर्तयन् जपेत् ।
न कम्पयेच्छिरोग्रीवां दन्तान्नैव प्रघट्टयेत् । इति ।

न चान्तरा व्याहरेत्तु विग्मेद्वा कदाचनेति व्यासः । नान्तराविरमेत्क्वचिदिति शौनकः । अन्तरा—गायत्रीजपमारभ्य समापनस्य मध्ये इत्यर्थः ।

३२ तत्र स्मृत्यन्तरे—

यो देवस्सवितास्माकं धियो धर्मादिगोचराः ।
प्रेरयेत्तस्य यद्भर्गस्तद्वरेण्यमुपास्महे ॥

अन्यत्र च—

देवस्य सवितुस्तेजो वरेण्यं भर्गसंज्ञिकम् ।
ध्यायेमहीति शब्दोक्तो धीमहीत्यर्थ उच्यते ॥
मन्त्रार्थमेवं सञ्चिन्त्य गायत्रीं प्रयतो जपेत् ॥ इति ।
गायन्तं त्रायते यस्मात् गायत्रीत्वं ततः स्मृतेति व्यासः ॥

तत्र यमः —

सहस्रपरमां देवीं शतमध्यां दशापराम् ।
गायत्रीन्तु जपेन्नित्यं सर्वपापप्रणाशिनीं ॥ इति ।

अपरां—अधमामित्यर्थः । दशापरामित्यापद्विषयम् । आपन्नश्चाशुचिः । कालेतिष्ठन्नपि जपेद्दश इत्याश्वलायनः । अशुचिः काले आशौचकाले इत्यर्थः ।

दशापत्सु जपेद्देवीमित्यन्यत्र च ।

तत्र योगयाज्ञवल्क्यः —

ब्रह्मचार्याहिताग्निश्च शतमष्टोत्तरञ्जपेत् ।
वानप्रस्थो यतिश्चैव जपेत्साष्टसहस्रकम् ॥ इति ।

१३ अथ गायत्रीप्रशंसा—

तत्र मनुः —

अकारञ्चाप्युकारञ्च मकारञ्च प्रजापतिः ।
वेदत्रयान्निरवृहद् भूर्भुवस्सुवरित्यपि ॥

निरवृहत्-निश्चकर्षत् ।

तदित्यृचो स्यास्सावित्र्याः परमेष्ठी प्रजापतिः ।
त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत् ॥
एतदक्षरमेताञ्च जपन् व्याहृतिपूर्विकाम् ।
सन्ध्ययोर्वेदविद्विप्रो वेद पुण्येन युज्यते ॥ इति ।

एतदक्षरं अकारश्च उकारश्च मकारश्च एकीकृतमक्षरं ॐकारम् प्रणवमित्यर्थः । एतां गायत्रीं—प्रणवव्याहृतिपूर्वां गायत्रीं जप्त्वा यथा ज्ञानेन सह वेदत्रयजापिनो यद् फलं तद् फलं लभते इत्यर्थः ॥ स एव—

सहस्रकृत्वस्त्वभ्यस्य बहिरेतत्त्रिकं द्विजः ।
महतोऽप्येनसो मासात् त्वचेवाहिर्विमुच्यते ॥ इति ।

बहिः —समापनाद् बहिः —समापनानन्तरमित्यर्थः । ग्रामाद्बहिः गत्वेति वा ।

एकाक्षरं परं ब्रह्म प्राणायामः परं तपः ।
सावित्र्यास्तु परन्नास्ति मौनात्सत्यं विशिष्यते ॥ इति ।

प्राणायामशब्देन व्याहृतयो लक्ष्यन्ते । मौनं समाधिः । सत्यं जपः । प्रणवं परब्रह्मस्वरूपम् । व्याहृतयः परमतपस्साधनभूताः । अतः प्रणवव्याहृतियुक्ता सावित्रीजपात् विशिष्टं न किञ्चिदस्ति । अतस्तज्जपस्समाधेरपि विशिष्यते इत्यर्थः ।

यमोऽपि—

गायत्रीञ्चैव वेदांश्च तुलयाऽतोलयत् प्रभुः ।
एकतश्चतुरो वेदान् सांगांश्च सपदक्रमान् ॥
एकतश्चैव गायत्रीं तुलारूपातु सा स्मृता ॥ इति ।

शंखोऽपि—

नाघमर्षणात् परमन्तर्जलेन व्याहृतिभ्यः परं हुतं न सावित्र्या परं जप्यमिति ॥

व्यासः —

दशकृत्वः प्रजप्ता या सा त्र्यहाद्यत् कृतं लघु ।
तत्पापं प्रणुदत्याशु नात्र कार्या विचारणा ॥
शतं जप्त्वा तु सा देवी उपपातकनाशिनी ।
कोटिजापेन गायत्र्या यदिच्छति तदाप्नुयात् ॥ इति ।

संवर्तोऽपि -

गायत्र्यास्तु परं नास्ति शोधना पापकर्मणाम् ।
ब्रह्मचारी मिताहारः सर्वभूतानुकम्पकः ॥
गायत्र्या लक्षजापेन सर्वपापैः प्रमुच्यते ।
अयाज्ययाजनं कृत्वा भुक्त्वाचान्नं विगर्हिता ॥
गायत्र्यष्टसहस्रन्तु जपं कृत्वा विशुद्ध्यति ॥
अष्टसहस्रम् अष्टौचसहस्राणीत्यर्थः ॥

विश्वामित्रोऽपि—

तदित्यृचा समो नास्ति मन्त्रो लोकचतुष्टये ।
सर्वे वेदाश्च यज्ञाश्च दानानि च तपांसि च ॥
समानि कलया प्राहुः मुनयो न तदित्यृचा ।
परिहाप्यापि वेदांस्त्रीन् कर्माणि विविधानि च ॥
गायत्रीमात्रमाश्रित्य द्विजो भवति निर्भयः ॥ इति ।

याज्ञवल्क्यः —

वायुभक्षो दिनं स्थित्वा रात्रिं नीत्वा तु सूर्यदृक् ।
जप्त्वा सहस्रं गायत्र्या शुचिर्ब्रह्मवधाद्भवेत् ॥ इति ।

स्मृत्यन्तरे —

न सीदत् प्रतिगृह्णानः पृथिवीं च ससागराम् ।
गायत्र्या लक्षजापेन पातकेभ्योऽपि मुच्यते ॥ इति ।

मार्कण्डेयः —

सर्वेषामपि पापानां सङ्करे समुपस्थिते ।
दशसहस्रमभ्यस्य गायत्रीं शोधयेत्ततः ॥ इति ।

३८ जपे वर्जनीयमुक्तं स्मृतिरत्ने—

नापाश्रितो न जल्पंश्च न प्रावृतशिरस्तथा ।
न पदा पदमाक्रम्य न च संभाक्रयन् जपेत् ॥ इति ।

अपाश्रीतः —स्तंभकुड्यादिकेष्वाश्रितः । जपकाले न भाषेत व्रतहोमादिकेषु चेति ।

अन्यत्र च—

असत्यभाषणं जिह्मभाषणं वर्जयेत्सदा ।
सत्यैरपि न भाषेत जपहोमार्चनादिषु ॥ इति ।

स्मृत्यन्तरे चन्द्रिकायामपि—

चण्डालादीञ्जपे होमे दृष्ट्वाचमेद्द्विजोत्तमः ।
तैश्च संभाषणं कृत्वा पुनस्नात्वा जपञ्चरेत् ॥
न स्त्रीभिर्नच शूद्रैश्च जपमध्येतु संवदेत् ।
अन्यैरपि न भाषेत तत्कृत्वाचमनञ्चरेत् ॥
श्वादीन् दृष्ट्वा तथाचमेत् कर्णं वा दक्षिणं स्पृशेत् ॥ इति ।

आचमनासंगते कर्णस्पर्शः प्रतिविधिः ।

कर्णस्पर्शे हेतुमाह पराशरः—

प्रभासादीनि तीर्थानि गङ्गाद्यास्सरितस्तथा ।
विप्रस्य दक्षिणे कर्णे सन्तीति मनुरब्रवीत् ॥ इति ।

स्मृतिसारेऽपि—

आदित्यो वरुणस्सोमो वह्निर्वायुस्तथैव च ।
विप्रस्य दक्षिणे कर्णे नित्यन्तिष्ठन्ति देवताः ॥ इति ।
स्पृशेद्वा दक्षिणं कर्णं स्मरेद्वा विष्णुमव्ययम् ॥ इत्यन्यत्र च ।

तत्र शौनकः

मनस्सन्तोषणं शौचं मौनं मन्त्रार्थचिन्तनम् ।
अव्यग्रत्वमनिर्वेदो जपस्संपत्तिहेतवः ॥ इति ।

स्मृतिरत्ने तु—

जकारो जन्मविच्छेदः पकारः पापनाशनः ।
जन्मकर्महरो यस्मात् तस्माज्जप इति स्मृतः ॥

मकारं मन इत्याहुः त्रकारस्त्राणमुच्यते ।
मनस्त्राणसमायुक्तो मन्त्र इत्यभिधीयते ॥ इति ।

३५ तत्र स्मृतिसारे—

जपेषु गणना कार्या पर्वभिर्वाक्षमालया ।
अङ्गुलैर्निन्दिता संख्या संख्याहीनन्तु निष्फलम् ॥ इति ।

गौतमः —

संख्या चैवोपवीतेन जपहोमादिनिष्फलम् ।
गच्छतस्तिष्ठतो वापि स्वेच्छया कर्म कुर्वतः ॥
अशुचेर्वा बिना संख्या तत्सर्वं निष्फलं भवेत् । इति ।

तिष्ठत इति गायत्रीजपव्यतिरिक्तविषयम् ॥
स्वेच्छया तिष्ठत इत्यर्थः ।

३६ तत्र अक्षमालाप्रकारमाह हरितः

शंखरूप्यमयी माला काञ्चनी निम्बजैः फलैः ।
पद्माक्षकैश्च रुद्राक्षैर्विद्रुमैर्मणिमौक्तिकैः ॥
रजतेन्द्राक्षकैर्माला तथैवाङ्गुलिपर्वभिः ।
पुत्रञ्जीवमयी माला शुभदा जपकर्मणि ॥ इति ।

उमामहेश्वरसंवादे तु—

अङ्गुलैर्जपसंख्यानां एकस्यैकं फलं स्मृतम् ।
रेखयाष्टगुणं विद्यात् पुत्रञ्जीवैर्दशाधिकम् ॥
शतंस्याच्छंखमणिभिस्सहस्रं विद्रुमैर्विदुः ।
पद्माक्षैर्दशसाहस्रं मौक्तिकैर्लक्षमुच्यते ॥
रजतैर्दशलक्षं स्यात् सुवर्णैः कोटिरुच्यते ।
रुद्राक्षैर्जपसंख्यानां अनन्तं फलमुच्यते ॥ इति ।
कुशग्रन्थ्या च रुद्राक्षैरनन्तगुणितं विदुः ॥

इति स्मृत्यन्तरेऽपि ।

रत्नावल्यान्तु—

पर्वभिश्च जपः कार्यो नाङ्गुलीनान्निपातनैः ।
तन्निपातैस्तु यज्जप्तं सर्वं विद्यात्तदासुरम् ॥
पर्वभिस्तु जपेद्देवीं अन्यत्रानियमः स्मृतः ।
गायत्र्या वेदमातृत्वाद्वेदः पर्वसु गीयते ॥ इति ।

प्रजापतिरपि—

ब्राह्मं गानन्त्यमाप्नोति रौद्रेश्च मणिभिर्बुधः ।
ब्राह्मः कुशमयो रौद्रो रुद्राक्षः पापनाशनः ॥
सावित्र्यास्तु जपस्ताभ्यामेकोऽप्यानन्त्यमश्नुते । इति ।

स्मृत्यन्तरे—

"रुद्राक्षमालया जप्तो मन्त्रोऽनन्तफलप्रदः । इति ।

ब्रह्मोत्तरे स्मृत्यन्तरे—

यः कुर्यात्तुलसीकाष्ठैरक्षमालां सुरूपिणीम् ।
कण्ठमालाञ्च धत्ते यः कृतन्तस्याक्षयं भवेत् ॥ इति ।

एतद्भावतवचनमिति धारणानिषेधस्तु स्मृतिरत्ने—

तुलसीकाष्ठसंभूतिं स्कन्धे मालां बिभर्ति यः ।
स शूद्रवद्बहिष्कार्यस्सर्वस्माद्द्विजकर्मणः ॥ इति ।

तथैव स्मृतिरत्नावल्यामपि—

स्कन्धे कण्ठे शिखायां वा यस्तु धारयते मणीन् ।
दैवे कर्मणि पित्र्ये च तं विप्रं दूरतस्त्यजेत् ॥ इति ।

स्मृतिसारे—

मणिभिस्त्वक्षसूत्रं स्यात्तदष्टशतसंख्यया ।
चतुष्पञ्चाशता वापि सप्तविंशतिरेव वा ॥ इति ।

अष्टशतं—अष्टोत्तरशतमित्यर्थः ॥

स्मृत्यन्तरे—

अष्टोत्तरशता माला पञ्चाशच्चतुरुत्तरैः ।
सप्तविंशतिभिः कार्या सर्वसाधारणे जपे ॥ इति ।

अन्यत्र तु—

अक्षैस्तु पञ्चदशभिराभिचारफलप्रदा ।
पञ्चविंशति मोक्षार्थं सप्तविंशति पौष्टिकम् ॥

त्रिशदक्षैः कृता माला शुभदा जपकर्मणि ।
अष्टोत्तरशता माला सर्वकार्यार्थसिद्धिदा ॥ इति ।

३७ तत्र मालारचनामाह हारीतः-

मणिमेकैकमादाय श्वेतसूत्रे प्रयोजयेत् ।
मुखं मुखेन संयोज्य पृष्ठं पृष्ठेन योजयेत् ॥

प्रोक्तसंख्यान्यमेकाक्षं मेरुत्वेनान्यतोन्यसेत् ।
एकैकमणिमध्येतु ग्रन्थिबन्धं प्रकल्पयेत् ॥

जपमालाविधिरयं ततस्संस्कारमाचरेत् ।
क्षालयेत्पञ्चगव्यैस्तां सद्योजातेन वै जलैः ॥

चन्दनागरुगन्धाद्यैर्गमदेवेन घर्षयेन् ।
धूपयेत्तामघोरेण लिम्पेत्तत्पुरुषेण तु ॥

मेरुञ्च पञ्चमेनैव तथा मन्त्रेण मन्त्रयेत् ।
मन्त्रेण शतवारन्तु पञ्चमेनाभिमन्त्रयेत् ॥

जप्यमन्त्रेण तां मालामभिमन्त्र्य सुगोपयेत्

३८ मध्यमानामिकाङ्गुष्ठैर्गृहीत्वा जपमाचरेत् ॥

मध्यमायान्यस्य मालां ज्येष्ठया वर्तयेत् क्रमात् ।
अपि चाङ्गुष्ठमध्यस्था चालयेन्मध्यमाग्रतः ॥

अङ्गुष्ठतर्जनीभ्यान्तु मालाकर्षंस्तु मध्यमः ।
कनिष्ठाङ्गुष्ठयोगेन मालाकर्षोऽधमः स्मृतः ॥

परिभ्रष्टिमतीमाला निष्फला जपकर्मणि ।
जपकाले त्वक्षमालां गुरोरपि न दर्शयेत् ॥

न स्पृशेद्वामहस्तेन करभ्रष्टान्नकारयेत् ।
तर्जन्या न स्पृशेत्सूत्रं कम्पयेन्नच धूनयेत् ।।

प्रमादात्पतिते हस्तात् शतमष्टोत्तरञ्जपेत् ।
जीर्णसूत्रे पुनस्सूत्रं ग्रथयित्वा शतञ्जपेत् ॥

भुक्तिमुक्तिप्रदस्सोऽयं मालिकाग्रथनक्रमः ॥ इति ।

गौतमोपि—

अङ्गुष्ठं मोक्षदं विद्यात् तर्जनी शत्रुनाशनी ।
मध्यमा धनकामायानामिका पौष्टिकी तथा ॥

कनिष्ठा रक्षणी प्रोक्ता जपकर्मणि शोभना ।
अङ्गुष्ठेन विना जप्यं कृतन्तदफलं भवेत् ॥

३९ उल्लङ्घिते तथा मेरौ पतिते चाक्षसूत्रके ।
प्राणायामत्रयं कृत्वा घृतप्राशनमाचरेत् ॥ इति ।

४० एवमत्रोक्तविधिना प्रातस्सन्ध्यायां तिष्ठन्नेव गायत्रीजपं कुर्यात् ॥ नैवासीनः । सायंसन्ध्यायामासीन एव जपेत् । नैव तिष्ठन् । तदाह मनुः—

पूर्वां सन्ध्यां जपंस्तिष्ठेत् सावित्रीमर्कदर्शनात् ।
पश्चिमान्तु समासीत सम्यगृक्षविभावनात् ॥

आ ऋक्ष इति पदच्छेदः ।

पूर्वां सन्ध्यां जपंस्तिष्ठन् नैशमंहो व्यपोहति ।
पश्चिमान्तु समासीनो मलं हन्ति दिवाकृतम् ॥ इति ।

तिष्ठन्प्रातर्जपेद्देवीमासीनः पश्चिमाञ्जपेत् । इति व्यासः ।

शौनकोऽपि—

> ऋष्यादीनि च संस्मृत्य ध्यायमासीतवाग्यतः ।
> प्रातस्तु प्राङ्मुखस्तिष्ठेन्मध्याह्ने सूर्यदृक्स्थितः ॥

मनुरपि—

> न तिष्ठति तु यः पूर्वामुपास्ते न तु पश्चिमाम् ।
> स शूद्रवद्बहिष्कार्यस्सर्वस्माद्द्विजकर्मणः ॥ इति ।

४२ तत्र सन्ध्यात्रयेऽपि ध्यानभेदमाह व्यासः—

> गायत्री नाम पूर्वाह्ने सावित्री मध्यमे दिने ।
> सरस्वती च सायाह्ने सैव सन्ध्या त्रिषु स्मृता ॥
>
> गायत्री तु भवेद्रक्ता सावित्री शुक्लवर्णिका ।
> सरस्वती तथा कृष्णा उपास्या वर्णभेदतः ॥
>
> गायत्री ब्रह्मरूपा तु सावित्री रुद्ररूपिणी ।
> सरस्वती विष्णुरूपा उपास्या रूपभेदतः ॥
>
> उदये ब्रह्मरूपन्तु मध्याह्ने तु महेश्वरम् ।
> सायाह्ने विष्णुरूपन्तु त्रिरूपश्चैवमुच्यते ॥
>
> अनुसन्ध्यमुपासीत सन्धिरूपं रविं द्विजः । इति ।

एवं ध्यात्वा यथविधि सन्ध्यासु सन्ध्यादि कालमारभ्य सन्ध्यावसानान्तं गायत्रीजपे कृते दीर्घायुष्यादीन् सर्वान् कामानाप्नोति इत्याह मनुः ।

> ऋषयो दीर्घसन्ध्यात्वात् दीर्घमायुरवाप्नुयुः ।
> प्रज्ञां यशश्च कीर्तिश्च ब्रह्मवर्चसमेव च ॥ इति ।

तत्र स्मृत्यन्तरे—

> एवं जप्त्वा तु गायत्रीं दीर्घसन्ध्यां द्विजोत्तमः ।
> प्रणवश्चोक्तवज्जप्त्वा ततस्सन्ध्यांसमापयेत् ॥ इति

दीर्घं सन्ध्यं सन्ध्याकालादित आरभ्य आसन्ध्यावसानमित्यर्थः।

४३ अन्यत्र तु —

समाप्तजप्यस्सन्ध्यान्ते उपतिष्ठेत भास्करम्।
स्व स्व गृह्योक्तमन्त्रेण शाखा सन्ध्यात्रिभेदतः॥

ततो दिग्भ्यस्सपालेभ्यो नमस्कृत्य यथादिशम्।
ततः प्रदक्षिणं कृत्वा सप्तपञ्चत्रिरेव वा॥

स्पृशेत्समन्त्रमवनीं यद्वातामभिवादयेत्॥ इति।

उपस्थानं स्वकैर्मन्त्रैरादित्यस्य तु कारयेदिति वसिष्ठः।

४४ अथ पुण्ड्रविधिः।

तत्र अरुणोदये स्नात्वा सन्ध्यावन्दनकालारम्भात् पूर्वं पुण्ड्रविधिः। प्रथममुच्यते—सन्ध्यावन्दनकाले आरब्धे पुनस्समापनानन्तरमेव पुण्ड्रधारणं कर्तव्यम्।

अत्र ऊर्ध्वपुण्ड्रविधिः प्रथममुच्यते।

तत्र स्मृत्यन्तरे—

आचम्य प्राङ्मुखस्स्थित्वा ध्यात्वा हृदि जनार्दनम्।
गुरूक्तेनैव मार्गेण धारयेदूर्ध्वपुण्ड्रकम्॥ इति।

ब्राह्मणानान्तु सर्वेषां वैदिकानामनुत्तमम्।
गोपीचन्दनवारिभ्यामूर्ध्वपुण्ड्रं विधीयते॥

इति स्मृतिप्रदीपिकायाञ्च॥

वसिष्ठोऽपि—

ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथवा यतिः।
अवश्यन्धारयेन्नित्यमूर्ध्वपुण्ड्रन्तु शोभनम्॥ इति।

स्मृत्यन्तरे—

गोपिका चन्दनालाभे तुलसीमूलमृत्तिकाम् ।
मुमुक्षुर्धारयेन्नित्यं परं मोक्षार्थसिद्धये ॥ इति ।

ऊर्ध्वपुण्ड्रं ललाटादिस्थानेषु द्वादशस्वपि ।
गृहस्थस्तु सदा धार्यं नामभिः केशवादिभिः ॥

पञ्चस्थानन्तु पुण्ड्रस्य ब्रह्मचारीवनस्थयोः ।
ललाटञ्च गलं वक्षः करमूलद्वयन्तथा ॥

धार्यन्तद्विष्णुगायत्र्या यद्वा कृष्णादिपञ्चकैः ।
यतेर्मूर्ध्नि ललाटे च वक्षसि प्रणवेन तु ॥

एकं परमहंसस्य ललाटे प्रणवेन च ॥ इति ।

ब्रह्माण्डे ब्रह्माणं प्रति भगवद्वचनम्—

ऊर्ध्वपुण्ड्र प्रमाणानि द्रव्याण्यङ्गुलिभेदतः ।
वर्णानि मन्त्रदेशांश्च प्रवक्ष्यमि फलानि च ॥

पर्वताग्रे नदीतीरे मम क्षेत्रे विशेषतः ।
सिन्धुतीरे च वल्मीके तुलसीमूलमाश्रिते ॥

मृद एतास्तु संग्राह्या वर्जयेदन्यमृत्तिकाः ।
श्यामं शान्तिकरं प्रोक्तं रक्तं वश्यकरं भवेत् ॥

श्रीकरं पीतमित्याहुर्वैष्णवं श्वेतमुच्यते ।
अङ्गुष्ठ पुष्टदः प्रोक्तो मध्यमायुष्करीभवेत् ॥

अनामिकान्नदा नित्यं मुक्तिदा च प्रदेशिनी ।
एतैरङ्गुलिभेदैस्तु कारयेन्न नखैस्पृशेत् ॥

वर्त्तिदीपाकृतिश्चापि वेणुपत्राकृतिन्तथा ।
पद्मस्य मुकुलाकारं तथैव कुमुदस्य च ॥

मत्स्यकूर्माकृतिश्चापि शंखाकारमथापि वा ।
दशाङ्गुलप्रमाणन्तु उत्तमोत्तममुच्यते ॥

नवाङ्गुलं मध्यमं स्यादाष्टाङ्गुलमतः परम् ।
सप्तषड् पञ्चभि पुण्ड्रं मध्यमन्त्रिविधं स्मृतम्॥
चतुस्त्रिद्व्यङ्गुलैः पुण्ड्रं कनिष्ठन्त्रिविधं स्मृतम् ।
ललाटे केशवं विद्यान्नारायणमथोदरे ॥

माधवं हृदि विन्यस्य गोविन्दं कण्ठकूबरे ।
उदरे दक्षिणे पार्श्वे विष्णुं विद्याद्द्विजस्तथा ॥
तत्पार्श्वे बाहुमध्ये तु स्मरेत्तु मधुसूदनम् ।
त्रिविक्रमं कण्ठदेशे वामकुक्षौ तु वामनम् ॥

श्रीधरं बाहुके वामे हृषीकेशन्तु तद्गले ।
पृष्ठे तु पद्मनाभञ्च ककुद्दामोदरं भवेत् ॥
द्वादशैतानि नामानि वासुदेवेति मूर्धनि ।
पूजाकाले च होमे च सायं प्रातस्समाहितः ॥
नामान्युच्चार्य विधिना धारयेदूर्ध्वपुण्ड्रकम् ॥
ऊर्ध्वपुण्ड्रधार्यो मर्त्यो म्रियते यत्रकुत्रचित् ।
श्वपाकापि विमानस्थो मम लोके महीयते ॥ इति ।

४५ अथ तत्प्रशंसा महोपनिषदि—

धृतोर्ध्वपुण्ड्रः परमेशितारं नारायणं सांख्ययोगाभिगम्यं ज्ञात्वा विमुच्येत नरस्समस्तैस्संसारभारैरिह चेति विष्णुं इति ॥

कठशाखायान्तु—

धृतोर्ध्वपुण्ड्रो धृतचक्रधारी
विष्णुं परं ध्यायति यो महात्मा ।
स्वरेण मन्त्रेण सदा हृदिस्थं
परात्परं यन्महतो महान्तम् ॥ इति ।

आथर्वणे च—

हरेः पादाकृतिमात्मनोहिताय मध्ये छिद्रपुण्ड्रमूर्ध्वपुण्ड्रं यो धारयति स परस्य प्रियो भवति, स पुण्यभाक् भवति, स मुक्तिभाक् भवति इति ।

विष्णुरपि—

अपवीतं शिखाबन्धमूर्ध्वपुण्ड्रविनाकृतम् ।
अपवित्रं कृतं कर्म विप्रस्य विफलं भवेत् ॥

इति स्मृत्यन्तरेऽपि—

होमपूजादिसमये सायं प्रातस्समाहितः ।
ऊर्ध्वपुण्ड्रधरो विप्रो भवेच्छुद्धो न चान्यथा ॥ इति ।

आत्रेयोऽपि—

ऊर्ध्वपुण्ड्रविहीनन्तु शरीरं शवसन्निभम् ।
ऊर्ध्वपुण्ड्रविहीनन्तु श्वपाकमिव सन्त्यजेत् ॥

ऊर्ध्वं नयति यत्पुण्ड्रं प्राणिनः पापकारिणः ।
तस्याख्या ह्यूर्ध्वपुण्ड्रेति तस्मात्तद्धारयेद्द्विजः । इति ।

मरीचिरपि -

सर्पं दृष्ट्वा यथा लोके दर्दुरा भयविह्वलाः ।
ऊर्ध्वपुण्ड्राङ्कितन्तद्वत् कम्पन्ते यमकिङ्कराः ॥ इति ।

व्यासोऽपि—

जाह्नवीतीरसंभूतां मृदमूर्ध्वं बिभर्ति यः ।
बिभर्ति रूपं सोऽर्कस्य तमोनाशाय वै स्मृतम् ॥

गङ्गाकूलमृदायस्तु बिभृयादूर्ध्वपुण्ड्रकम् ।
तदङ्गं ये निरीक्षन्ते ते यान्ति त्रिदिवं नराः ॥ इति ।

पाद्मेऽपि—

ऊर्ध्वपुण्ड्रस्य माहात्म्यं वक्ष्यामि तव पार्वति ।
धारणादेव मुच्यन्ते भवबन्धाद् द्विजोत्तमाः ॥

ऊर्ध्वपुण्ड्रस्य मध्ये तु विशाले सुमनोहरे ।
लक्ष्म्या सार्धं समासीनो देवदेवो जनार्दनः ॥

तस्माद्यस्य शरीरे तु ऊर्ध्वपुण्ड्रं कृतं भवेत् ।
तस्य देहं भगवतो विशालं मन्दिरं शुभम् ॥

ऊर्ध्वपुण्ड्रविहीनो यस्सन्ध्याकर्मादिकञ्चरेत् ।
तत्सर्वं राक्षसैर्नीतं नरकञ्चैव गच्छति ॥ इति ।

स्मृत्यन्तरे—

अशुचिश्चाप्यनाचारो मनसा पापमाचरन् ।
अशुचिरेव भवेन्नित्यमूर्ध्वपुण्ड्रस्य धारणात् ॥ इति ।

४९ अथ त्रिपुण्ड्रविधिः -

स्मृत्यन्तरे—

आचम्य प्राङ्मुखस्थित्वा नमस्कृत्वा महेश्वरम् ।
गुरुपदिष्टमार्गेण भस्मस्नानं समाचरेत् ॥

तत उद्धूलनं कृत्वा त्रिपुण्ड्रं धारयेत्ततः ॥ इति ।

स्मृतिसारेऽपि—

पूर्वमुद्धूलनं कुर्याद् भस्मना मन्त्रपूर्वकम् ।
ततो मन्त्राम्भसाभ्युक्ष्य समन्त्रन्तु त्रिपुण्ड्रकम् ॥

शिरे मध्ये ललाटे च गले मूले च हस्तयोः
उरस्थले च नाभ्याञ्च जान्वोः कट्यान्तु पृष्ठत ॥

कृत्वैवं क्रमशः पश्चात्सर्वाङ्गं व्यापकञ्चरेत् ॥ इति ।

लैङ्गे वसिष्ठं प्रति महादेववचनम्—

भस्मसिद्धिकरं ब्रह्म सत्यबोधसुखावहम् ।
भस्म तद्वेदनाल्लभ्यं मुख्यं तदधिकं नहि ॥

त्रैवर्णिकानां सर्वेषामग्निहोत्र समुद्भवम् ।
विरजानलजञ्चैव धार्यं भस्म महामुने ॥

औपासनसमुत्पन्नं गृहस्थानां विशेषतः ।
समिदग्निसमुत्पन्नं धार्यं वै ब्रह्मचारिणाम् ॥

शूद्राणां श्रोत्रियागारे पाचनाग्निसमुद्भवम् ।
अन्येषामपि सर्वेषां धार्यं दावानलोद्भवम् ॥

अग्निरित्यादिभिर्मन्त्रैस्त्र्यम्बकैस्तथा ।
जाबालैस्सप्तभिर्वापि मुख्येनैव तु भस्मना ॥

उद्धूनयेत् स्वकं देहं पापपुञ्जक्षयावहम् ।
त्रियायुषेण मन्त्रेण मेधावित्यादिनाथवा ॥

मुख्येन भस्मना धार्यं त्रिपुण्ड्रं ब्रह्मचारिणाम् ।
त्रियंबकेन मन्त्रेण सतारेण तथैव च ।
पञ्चाक्षरेण मन्त्रेण प्रणवेन युतेन च ।
ललाटे हृदये चैव दोर्द्वन्द्वे च महामुने ॥

त्रिपुण्ड्रन्धारयेन्नित्यं गृहस्थश्च वनाश्रमी ।
आत्ममन्त्रेण हंसेन प्रणवेन समाहितः ॥

त्रिपुण्ड्रन्धारयेन्नित्यं सन्यासाश्रममाश्रितः ।
नमोऽन्तेन शिवेनैव शूद्रश्शुश्रूषणप्रिया ॥

उद्धूलनं त्रिपुण्ड्रञ्च नित्यं भक्त्या समाचरेत् ।
अन्येषामपि सर्वेषां विनामन्त्रेण सुव्रतः ।
उद्धूलनं त्रिपुण्ड्रञ्च कर्तव्यं भक्तितो मुने ॥ इति ।

अथ तत्प्रशंसा—जाबालोपनिषदि—

अथर्वशिरसि च त्रिपुण्ड्रं भस्मना करोति यो विद्वान् ब्रह्मचारी गृहस्थो वानप्रस्थो यतिर्वा स समस्तमहापातकोपपातकेभ्यः पूतो भवति, स सर्वान्देवान्ध्यातो भवति, स सर्वेषु तीर्थेषु स्नातो भवति, स सर्वसम्पत्समृद्धो भवति, स सर्वरुद्रमन्त्रजापी भवति, स सर्वभोगभुक् देहन्त्यक्त्वा शिवसायुज्यमाप्नोति, न च पुनरावर्तते न च पुनरावर्तते इत्याह भगवान् कालाग्निरुद्र इति ॥

शातातप: —

सत्यं शौचन्तपोहोमस्तीर्थं देवाभिपूजनम् ।
तस्यप्यर्थमिदं सर्वं यस्त्रिपुण्ड्रन्नधारयेत् ॥ इति ।

भरद्वाज: —

अथाग्निहोत्रजेनैव भस्मना तु त्रिपुण्ड्रकम् ।
नित्यं द्विजः प्रमोदेन धार्यं कर्मविवृद्धये ॥
अन्यथा सर्वकर्माणि न फलन्ति कदाचन ॥ इति ।

स्मृत्यन्तरे—

त्रिपुण्ड्रं परमं पुण्यं ब्रह्मविष्णुशिवात्मकम् ।
ये घोरा राक्षसा प्रेता ये चान्ये क्षुद्रजन्तवः ॥
त्रिपुण्ड्रधारिणं दृष्ट्वा पलायन्ते न संशयः ।
त्रिपुण्ड्रं धारयेद्यस्तु शिवप्रवणमानसः ॥
भूर्भुवस्वस्त्रयो लोका धृतास्तेन महात्मना ॥ इति ।

लोकाक्षिरपि—

मध्यमानामिकाङ्गुष्ठैर्ललाटे भस्मना कृतम् ।
तत् त्रिपुण्ड्रं भवेच्छस्तं महापातकनाशनम् ॥ इति ।

क्रियासारे—

मध्याङ्गुलित्रयेणैव स्वदक्षिणकरस्य तु ।
षडङ्गुलायतम्मानमथवाधिकमानकम् ॥
नेत्रयुग्मप्रमाणं वा कुर्याद्दीर्घं त्रिपुण्ड्रकम् ।
कदाचिद्भस्मना कुर्यात् स रुद्रो नात्रसंशयः ॥
अकारोऽनामिका प्रोक्ता उकारो मध्यमाङ्गुलिः ।
मकारस्तर्जनी तस्मात् त्रिभिः कुर्यात् त्रिपुण्ड्रकम् ॥ इति ।

मध्यमाङ्गुलिभिरादाय त्रिपुण्ड्रं धारयेत् सदेत्यन्यत्र च ।

स्मृत्यन्तरे—

ऊर्ध्वं पुण्ड्रं भवेत्साम मध्यपुण्ड्रं यजूंषि च ।
अधः पुण्ड्रमृचः साक्षात् तस्मात् पुण्ड्रं त्रियायुषम् ॥ इति ।

गारुडे—

श्रुतयस्मृतयस्सर्वाः पुराणान्यखिलान्यपि ।
वदन्ति भूतिमाहात्म्यं ततस्तान्धारयेद्द्विजः ॥
उद्धूलनन्त्रिपुण्ड्रञ्च मनसापि न सन्त्यजेत् ।
श्रुत्या विधीयते तस्मात् तत्त्यागी पतितो भवेत् । इति ।

४७ भारते

आयुष्कामो नवा राजन् भूतिकामोऽथवा नरः ।
नित्यं वै धारयेद्भस्म मोक्षकामी च वै द्विजः ॥ इति ।

शङ्करसंहितायाञ्च—

यत्र भुञ्जीत भस्माङ्गी मूर्खो वा पण्डितोऽपि वा ।
तत्र भुङ्क्ते महादेवस्सपत्नीको वृषध्वजः ॥
भूतिरेवौषधं पुंसां मुक्तिश्रीवश्यकर्मणि ॥ इति ।

सारसमुच्चये—

सन्त्यक्तसमयाचारो मनसा पापमाचरन् ।
शुचिरेव भवेन्नित्यं त्रिपुण्ड्रस्य तु धारणात् ॥ इति ।

ब्रह्मवैवर्ते—

धार्यं भस्म सदाग्निहोत्रजनितं यद्वैदिकं वैदिकै-
स्तिर्यक्पुण्ड्रतया ललाटफलके वक्षस्थले मस्तके ।
बाह्वोर्मन्त्रपुरस्सरं क्रतुशतं तैरेव सम्यक् कृतम्
स्नातं तीर्थसमस्तकोटिषु धरादत्तानवद्याखिला ॥

स्मृतिभास्करे—

भासनात् भसितं प्रोक्तं भस्मकल्मषभक्षणात् ।
भूति भूतिकरीपुंसां रक्षारक्षाकरी परम् ॥ इति ।

स्कान्दे—

भस्मना वै त्रिसन्ध्यञ्च ताम्रिकाणाञ्जपर्यूतम् ।
धार्यं त्रिपुण्ड्रं स्त्रीणां च यतीनां जलवर्जितम् ॥
वनस्थप्रतिकन्यानां दीक्षाहीननृणान्तथा ।
मध्याह्नात्प्राक्जलैर्युक्तं परतो जलवर्जितम् ॥ इति ।
प्रातर्जलेन संयुक्तम्मध्याह्ने चन्दनैर्युतम् ।
भूतिरंभोविरहिता सायमंहोविनाशिनी ॥ इति ।

स्मृत्यन्तरेऽपि—

शूद्रहस्तगतं भस्म द्विजादिर्नैवधारयेत् ।
तथैवान्त्यजहस्तस्थं शूद्रैर्धार्यन्नजातुचित् ॥

इत्यन्यत्र ॥ तत्रैवं स्थिते ऊर्ध्वपुण्ड्रं वा त्रिपुण्ड्रं वा द्वयञ्च वा धार्यमित्युक्तम् ।

स्मृत्यन्तरे—

ऊर्ध्वपुण्ड्रं त्रिपुण्ड्रं वा धारयेत यथा कुलम् ।
उभयं वा यथाचारं धारयेद्वैदिको द्विजः ॥ इति ।

तत्र व्यवस्थामाह पाद्मे—

ऊर्ध्वपुण्ड्रं त्रिपुण्ड्रञ्च द्वावेतौ धारयेद्द्विजः ।
तयोरेकं परित्यज्य रौरवं नरकं व्रजेत् ॥
ऊर्ध्वपुण्ड्रं मृदा पूर्वमनुष्ठाय समाचरेत् ।
अग्निहोत्रसमुद्भूत भस्मनापि त्रिपुण्ड्रकम् ॥ इति ।

तथैव ब्रह्मकैवर्ते वृद्धगिरिमाहात्म्ये—

तिर्यक् भस्ममृदं अथोर्ध्वमुदितां धत्ते नयोप्यन्यये
विप्रध्वंसनमन्यधारणकृते भस्मापि धार्यन्ततः ।

यत्रान्योपरि भस्मधारणकृतो मोहादयन्निष्पते-
दन्यच्चन्दनकुङ्कुमाद्यपि च यत् सा लौकिकी केवलम ॥

इति । अस्यार्थः — भस्मना त्रिपुण्ड्रं तिर्यक् धार्यं मृदा ऊर्ध्वपुण्ड्रं धार्यमिति व्यवस्था । अनयोर्व्यत्यये भस्मना ऊर्ध्वपुण्ड्रं च मृदा तिर्यक्पुण्ड्रञ्च कृतञ्चेत् विप्रध्वंसनं ब्राह्मण्यहानिरित्यर्थः भवतीति शेषः ॥ अन्यधारणकृतः ततः भस्मापि धार्यं भस्मनोन्यद् गोपी-चन्दनादिकं धृत्वा तदुपरि भस्मधार्यं भस्मन उपरि यत्किञ्चिदपि न धार्यमित्यर्थः मोहात् — अज्ञानात् प्रमादाद्वा नान्योपरि भस्मधारणकृतः अन्योपरि न यथा भवति तथा भस्मधारणं कृत्वा गोपीचन्दनादीनां सर्वेषामुपरि भस्मारणमकृत्वा भस्मन उपरि यत्किञ्चिदपि धृतञ्चेदित्यर्थः निष्पतेत् । ब्राह्मणात् पतितो भवति । अन्यत् चन्दनादिकं केवलं लौकिकमेव भस्म वैदिकमेव । अतो वैदिकभस्मोपरि लौकिकचन्दनादिकं न धार्यमित्यर्थः ॥

तथैव स्मृत्यन्तरे-

वैदिकैर्मन्त्ररहितं चन्दनागरुकुङ्कुमम् ।
तिर्यक्पुण्ड्रतयाधार्यं कान्तिसौख्याभिलाषिभिः
चन्दनादुपरि प्राज्ञो धारयेद् भस्म वैदिकम् ।
लौकिकं चन्दनाद्यन्तु भस्मोपरि न धारयेत् ॥ इति ।

तत्र किञ्चित् प्रकारान्तरमुक्तं स्मृतिरत्ने —
ब्राह्मणानां नृपाणाञ्च भस्ममिश्रञ्च चन्दनम् ।
नेत्रयुग्मप्रमाणन्तु त्रिपुण्ड्रोपरि चेष्यते ॥ इति ।

स्मृतिसारे—

त्रिपुण्ड्रभस्मना तिर्यक् ऊर्ध्वपुण्ड्रं मृदा न्यसेत् ।
उभयञ्चन्दनेनैव वर्तुलन्न कदाचन ।
न कदाचिन्मृदं तिर्यक् न्यसेदूर्ध्वं न भस्मना ।
तुषादि भस्मपाषाणरजो धार्यन्नच क्वचित् ॥ इति ।

तत्र पद्धतौ—

ऊर्ध्वपुण्ड्रं त्रिपुण्ड्रं वा नित्यमेव तु धारयेत् ।
श्राद्धकाले च सम्प्राप्ते कर्ता भोक्ता च वर्जयेत् ॥

इति । एवं स्नानादि पुण्ड्रधारणान्तस्समाप्तः ।

४८ अथ गौणस्नानविधिः ।

तत्र दक्षः-

आशिरस्कं भवेत्स्नानं कण्ठमात्रमशक्तितः ।
आर्द्रेण वाससा वापि सर्वाङ्गं परिमार्जनम् ॥

इति ।

जाबालिरपि—

आशिरस्कं भवेत् स्नानं स्नानाशक्तौ तु कण्ठतः ।
तस्याप्यसामर्थ्यविधौ मन्त्रस्नानादिकश्चरेत् ॥
नाभिमात्रन्निमज्याप्सु कटिं वा क्षालयेज्जलैः ।
आर्द्रेण वाससा वाङ्गमार्जनं कापिलं विदुः ॥ इति ॥

पराशरस्तु—

स्नानानि पञ्च पुण्यानि कीर्तितानि मनीषिभिः ।
आग्नेयं वारुणं ब्राह्मं वायव्यं दिव्यमेव च ॥
आग्नेयं भस्मना स्नानमवगाह्यन्तु वारुणम् ।
आपोहिष्ठेति च ब्राह्मं वायव्यं गोरजस्मृतम् ॥
यत्र सातपवर्षेण तत्स्नानं दिव्यमुच्यते ।
तत्र स्नातो हि गङ्गायां स्नातो भवति मानवः ॥

इति ।

याज्ञवल्क्योऽपि—

असामर्थ्याच्छरीरस्य कालशक्त्याद्यपेक्षया ।
मन्त्रस्नानादिकान् सप्त केचिदिच्छन्ति सूरयः ॥

मान्त्रं भौममथाग्नेयं वायव्यान्दिव्यमेव च ।
वारुणं मानसञ्चेति सप्तस्नानान्यनुक्रमात् ॥ इति ।

तत्र व्यासः —

शुचिदेशान्मृदुद्गृह्य कुर्याद् गात्रोपलम्भनम् ।
मन्त्रैः पार्थिवसंयुक्तैर्भौमं स्नानन्तदुच्यते ॥ इति ।

"मृत्तिकेह न मे पापं" इत्यादयः पार्थिवमन्त्राः ॥

भरद्वाजः —

प्राङ्मुखश्चरणौ हस्तौ प्रक्षाल्याचम्य पूर्ववत् ।
प्राणानायम्य सङ्कल्प्य भस्मस्नानं समाचरेत् ॥

आदाय भस्मितं श्वेतमग्निहोत्रसमुद्भवम् ।
ईशानेन तु मन्त्रेण स्वमूर्धनि विनिक्षिपेत् ॥

तत आदाय तद्भस्म मुखे तत्पुरुषेण तु ।
अघोराख्येण हृदये गुह्ये वामाह्वयेन च ॥

सद्योजाताभिधानेन भस्म पादद्वये क्षिपेत् ।
सर्वाङ्गं प्रणवेनैव मन्त्रेणोद्धूलयेत्ततः ।
एतदाग्नेयकं स्नानमुदितं परमर्षिभिः ।
सर्वकर्मसमृद्ध्यर्थं कुर्यादादाविदं बुधः ॥ इति ।

व्यासः —

गोखुराद्रज आदाय गोसावित्रीं जपेत् बुधः ।
गात्रेष्वथ तदालभ्य स्नानं वायव्यमुच्यते ॥

उत्तरायणमध्ये तु यदा वर्षति वासवः ।
आतपेन सह स्नानं दिव्यस्नानं तदुच्यते ॥ इति ।

अवगाहन्तु वारुणमिति पराशरः ।

आपोहिष्ठादिभिर्मान्त्रं मानसं विष्णुचिन्तनम्

इति स्मृत्यन्तरे ।

गायत्रस्नानमुक्तं स्मृतिरत्ने—

गायत्र्या जलमादाय दशकृत्वोऽभिमन्त्र्य च ।
शिरस्यङ्गानि सर्वाणि प्रोक्षयेत्तेन वारिणा ॥
स्नानं गायत्रकं नाम सर्वपापप्रणाशनम् ॥ इति ।

स्मृत्यन्तरे—

असामर्थ्याच्छरीरस्य वैषम्याद्देशकालयोः ।
स्नानान्येतानि तुल्यानि वारुणेन भवन्ति हि ॥ इति ।

४९ प्रभुः तत्र प्रथमकल्पेऽपि योऽनुकल्पे प्रवर्तते न साम्परायिकं तस्य दुर्मदुर्मतेर्वर्तते फलमिति । प्रभुः शक्तः । प्रथमकल्पो मुख्यविधिः । अनुकल्पो गौणविधिः। साम्परायिकं आमुष्मिकम् ॥

५० अथ द्विराचमनविधिः ।

स्मृत्यन्तरे—

अधोवायुसमुद्भूते प्रहासेऽनृतभाषणे ।
निमित्तेष्वेषु सर्वेषु कर्म कुर्वन्नुपस्पृशेत् ॥ इति ।

प्रहास उच्चैर्हासः ।

स्मृतिरत्नावल्यान्तु—

भक्ष्यमाणो द्विराचमेत् भुक्त्वा च मतिमान्द्विजः ।
दाने प्रतिग्रहे होमे सन्ध्यात्रितयवन्दने ॥
बालिकर्मणि चाचमेदादौ द्विरन्ततो द्विजः ॥ इति

स्मृतिरत्नेऽपि—

वासोन्तरपरीधाने स्नाने रथ्योपसर्पणे :
हविश्शेषप्राशने च द्विराचमनमाचरेत् ॥ इति ।

वसिष्ठः—

सुप्त्वा भुक्त्वा क्षुतं कृत्वा स्नात्वा पीत्वा तथैव च ।
पुनराचमनं कुर्यात् इति ।

हारीतोऽपि—

श्रौतस्मार्तेषु काण्डेषु कृत्येषु विधिवद्बुधः ।
द्विराचमेत्तु सर्वत्र विण्मूत्रोत्सर्जने त्रयम् ।। इति ।

५१ अथ पञ्चयज्ञविधिः ।।

तत्र संवर्तः —

पञ्चयज्ञविधानञ्च कुर्यादहरहर्द्विजः ।
न हापयेच्च तच्छक्तः श्रेयस्कामो द्विजोत्तमः ।। इति ।

न हापयेत् — न त्यजेदित्यर्थः ।।

हापनं तस्य कुर्वीत सदा मरणजन्मनोरिति । आशौचयोरिति शेषः । तत्र देवपितृभूतर्षिमनुष्ययज्ञा इति पञ्चमहायज्ञाः । तेषु-देवपितृभूतयज्ञा इति त्रयो यज्ञाः वैश्वदेवेन्तर्भूताः । ऋषियज्ञो ब्रह्मयज्ञः मनुष्ययज्ञोऽतिथिपूजा ।

तत्रहारीतः —

यद्देवेभ्यो जुहोति देवलोकं तेनाभिजयति, यत्पितृभ्या पितृलोकन्तेन, यत्स्वाध्यायमतीते ऋषिलोकं तेन । यद् भूतेभ्यो बलिं हरति भूतलोकन्तेन । यद् ब्राह्मणां स्तर्पयति मनुष्यलोक-न्तेनाभिजयतीति ।।

व्यासः —

ऋषयः पितरो देवाः भूतान्यतिथयस्तथा ।
आशंसन्ते कुटुंबिभ्यः तेभ्यः कार्यं विजानति ।
एवं यस्सर्वभूतानि ब्राह्मणो नित्यमर्चति ।
स गच्छति परं स्थानं तेजो मूर्तिपरा इति ।

स एव—

ऋषीन्देवान् पितंश्चैव भूतानि ब्राह्मणांस्तथा
तर्पयन् विधिना विप्रो ब्रह्मभूयाय कल्पते ।।

५२ अकरणे प्रत्यपायमाह स एव—

वैश्वदेवेन ये हीना स्वाध्यायेन च वर्जिताः ।
सर्वे ते वृषला ज्ञेया प्राप्तवेदा अपि द्विजाः ॥

अकृत्वा पञ्चयज्ञांस्तु भुक्त्वा चान्द्रायणञ्चरेत् ॥

इति ।

वसिष्ठोऽपि—

अकृत्वा वैश्वदेवन्तु भुञ्चते ये द्विजोत्तमाः ।
स्वप्रधानान्नपाकेन काकयोनिं व्रजन्ति ते । इति ।

भृगुरपि—

यद्फलं सोमयागेन प्राप्नोति धनवान्द्विजः ।
सम्यक् पञ्चमहायज्ञैर्दरिद्रस्तदवाप्नुयात् ॥

पञ्चयज्ञांस्तु यो मोहात् न करोति गृहाश्रमी ।
तस्य नास्ति परो लोके लोके भवति निन्दितः ॥

अकृत्वा वैश्वदेवन्तु भुञ्जते ये द्विजोत्तमाः ।
सर्वे ते निष्फला ज्ञेयाः पतन्ति नरकेऽशुचौ ॥ इति ।

द्विजोत्तमाः ब्राह्मणाः इत्यर्थः ॥

५३ तत्र श्राद्धदिवसे श्राद्धकरणात्परमेव वैश्वदेवं कर्तव्यमित्याह मनुः ॥

उच्छोषणात्तु तत्तिष्ठेद्यावद्विप्रा विसर्जिताः ।
ततो गृहबलिं कुर्यादिति धर्मो व्यवस्थितः ॥ इति ।

गृहबलिः— वैश्वदेवम् ॥

स्मृत्यन्तरे—

यदा श्राद्धं पितृभ्यस्तु दातुमिच्छति मानवः ।
वैश्वदेवन्तदा कुर्याद् निवृत्ते श्राद्धकर्मणि ॥ इति

वेटीन्निरपि—

श्राद्धं निर्वर्त्य विधिवत् वैश्वदेवादिकन्ततः ।
कुर्याद् भिक्षां ततो दद्यात् हन्तकारादिकं तथा ॥ इति ।

कूर्मपुराणेऽपि—

कृत्वा श्राद्धं महाबाहो ब्राह्मणांश्च विसृज्य तु ।
वैश्वदेवादिकं कर्म ततः कुर्यान्नराधिपः । इति ॥ ।

वैश्वदेवादिकमित्यादि शब्देन विष्णुशिवपूजनादि देवकार्याण्युक्तानि ।

उपहारबलिं भिक्षां वैश्वदेवं सुरार्चनम् ।
न श्राद्धदिवसे कुर्याद्विप्राणां प्राग्विसर्जनात् ॥

इति स्पष्टमेवोक्तं भवति । तत्र देवपूजाया अनन्तरमेव वैश्वदेवं कर्तव्यमित्याह हारीतः ।

द्विजः पुरुषसूक्तेन विधिना विष्णुमर्चयेत् ।
वैश्वदेवन्ततः कुर्यात् बलिकर्मविधानतः ॥ इति ।

५४ तत्र पञ्चयज्ञेषु पञ्चमो मनुष्ययज्ञो नाम अतिथिपूजा—तद्विधमाह व्यासः —

आचम्य च ततः कुर्यात् प्राज्ञो द्वारावलोकनम् ।
मुहूर्तस्याष्टमं भागं उदीक्ष्यो ह्यतिथिर्भवेत् ॥

इति । मुहूर्ताष्टभागाः पादघटिकामात्रकाल इत्यर्थः ।

तथैव माधवीये—

ततो गोदोहमात्रं वै कालन्तिष्ठेद् गृहाङ्कणे ।
अतिथिर्ग्रहणार्थाय तदूर्ध्वं वा यथेच्छया ॥
नाडिकायाश्चतुर्भागं गोदोहं बुधाः ॥ इति ।

तथैव शंखवचनम् ॥

अतिथिलक्षणमाह पराशरः—

दुष्टो वा यदि वा द्वेष्यो मूर्खः पण्डित एव वा ।
संप्राप्तो वैश्वदेवान्ते सोऽतिथिः स्वर्गसंक्रमः ॥

दूराध्वोपगतं श्रान्तं वैश्वदेव उपस्थितम् ।
अतिथिं तां विजानीयात् नातिथिः पूर्वमागतः ॥

नैकग्रामीणमतिथिं संगृह्णीत कथञ्चन ।
अनित्यमागतो यस्मात् तस्मादतिथिरुच्यते ॥ इति ।

भिक्षुलक्षणमाह व्यासः —

यतिश्च ब्रह्मचारी च विद्यार्थी गुरुपोषकः ।
अध्वगः क्षीणवृत्तिश्च षडेते भिक्षुकास्स्मृताः ॥ इति ।

मनुः —

भूत्वैतत् बलिकर्मैवमतिथिं पूर्वमाशयेत् ।
भिक्षाञ्च भिक्षवे दद्यात् विधिवत् ब्रह्मचारिणे ॥
इति ॥

हारीतः —

अतिथी नागताञ्छक्त्या पूजयेदविचारतः ।
अन्यानभ्यागतान् विप्रान् पूजयेच्छक्तितोगृही ॥
इति ।

नृसिंहपुराणे—

भिक्षाञ्च भिक्षवे दद्यात् परिव्राट् ब्रह्मचारिणे
अकल्पितान्नादुद्धृत्य सर्वव्यञ्जनसंयुतम् ॥ इति

व्यासः —

हन्तकारमथाग्रं वा भिक्षां वा शक्तितो द्विजः ।
दद्यादतिथये नित्यं बुध्येत्तं परमेश्वरम् । इति ।

५५ स्मृतिरत्ने—

यवानां व्रीहिशालीनां द्वेशते ग्रासमुच्यते ।
ग्रासप्रमाणं भिक्षा स्यादग्रं ग्रासचतुष्टयम् ॥ इति ।

प्रजापतिरपि—

ग्रासमात्रं भवेद्भिक्षा अग्रं ग्रासचतुष्टयम् ।
अग्रं चतुर्गुणीकृत्य हन्तकारं विधीयते ॥ इति ।

यमः —

आहारमात्रादधिकं न कश्चिद् भैक्ष्यमाचरेत् ।
युज्यते स्तेयदोषेण कामतोऽधिकमाचरन् ॥ इति ।

बृहस्पतिः —

वेदविद्याव्रतस्नाते श्रोत्रिये गृहमागते ।
क्रीडन्त्योषधयस्सर्वा यास्यामः परमां गतिम् ॥

इति । ओषधयः — अन्नोपदंशसाधनाद्याः

नष्टशौचे व्रतभ्रष्टे विप्रे वेदविवर्जिते ।
दीयमानं रुदन्त्यन्नं किं मया दुष्कृतं कृतम् ॥ इति ।

याज्ञवल्क्यः —

बालस्ववासिनीवृद्धगर्भिण्यातुरकन्यकाः ।
संभोज्यातिथिभृत्यांश्च दम्पत्योश्शेषभोजनम् ॥

इति ॥

५६ तत्प्रशंसा पराशरः

यतिहस्ते जलं दद्यात् भैक्ष्यन्दद्यात्पुनर्जलम्
तद्भैक्ष्यं मेरुणा तुल्यं तज्जलं सागरोपमम् ॥ इति ।

व्यासः —

द्वाविमौ पुरुषौ लोके सूर्यस्योपरि तिष्ठतः ।
अन्नप्रदाता दुर्भिक्षे सुभिक्षे हेमवस्त्रदः ॥ इति ।

शातातप: —

स्वाध्यायेनाग्निहोत्रेण यज्ञेन तपसा तथा ।
नावाप्नोति गृही लोकान् यथात्वतिथिपूजनात् ।।

अकरणे प्रत्यपायमाह स एव —

अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते ।
पितरस्तस्य नाश्नन्ति दशवर्षाणि पञ्च च ।।

इति ।

५७ अथ भोजनविधि:

धर्मोद्योते—

पितृदैवतभृत्यानां मातापित्रोर्गुरोस्तथा ।
विघसं प्राग्यतोऽश्नीयादेवं धर्मो न हीयते ।।

इति । विघसं=विशिष्टं ।

विष्णुपुराणे—

तत: स्ववासिनी दु:खी गार्भिणीवृद्धबालकान् ।
भोजयेत्सघृतान्नेन प्रथमन्तु परंगृही ।। इति ।

तत: - अतिथिभोजनानन्तरमित्यर्थ: ।

पितामह: —

उपलिप्ते शुचौ देशे निच्छिद्रं चतुरश्रकम् ।
गोमयं मण्डलं कृत्वा भोक्तव्यमिति निश्चय:
चतुरश्रं ब्राह्मणस्य त्रिकोणं क्षत्रियस्य च
वर्तुलञ्चैव वैश्यस्य शूद्रस्याभ्युक्षण स्मृतम् ।।

इति ।

व्यास: —

स्वयं प्रक्षाल्य पात्राणि दत्तमन्नन्तु भार्यया ।
भोक्तव्यं सघृतं सोष्णं हितं पथ्यं मितं तथा ।। इति ।

शाण्डिल्यः —

आहारन्तु रहः कुर्याद् विहारञ्चैव सर्वदा ।
गुप्ताभ्यां लक्ष्म्युपेत स्यात् प्रकाशे हीयते श्रिया ॥ इति ।

पश्चार्द्रो भोजनं कुर्यादिति व्यासः । पश्चार्द्रत्वं स्पष्टीकरोति शंखः

उपलिप्य शुचौ देशे पादौ प्रक्षाल्य वै करौ ।
आचम्यार्द्राननो क्रोधः पश्चार्द्रो भोजनञ्चरेत् ॥ इति ॥

स्मृत्यन्तरे —

समन्त्राचमनं कृत्वा सप्राणाहुतिपञ्चकम् ।
दशनस्पर्शरहितं कृत्वा भुञ्जीत वाग्यतः ॥
यथा रसन्नजानाति जिह्वा प्राणाहुतेर्द्विजः ।
तथा समाहितः कुर्यात् प्राणाहुतिमतन्द्रितः ॥ इति ।

स्मृत्यर्थसारे —

आपोऽशनं वामभागे सुरापानसमं भवेत् ।
तदेव दक्षिणे भागे सोमपानसमं भवेत् ॥ इति ।

स्मृत्यन्तरे —

आपोऽशनं ततः कुर्याद् वामभागे तु तं यदि ।
सद्यः पिबेत् सुरापानं इत्येवं मनुरब्रवीत् ॥

इति ॥

५८ अत्रिः —

शब्देनापः पयः पीत्वा शब्देन घृतपायसे ।
शब्देनापोऽशनं कृत्वा सुरापानसमं भवेत् ॥
क्षीरं लवणसंयुक्तं उच्छिष्टे घृतसेचनम् ।
रजस्वलामुखास्वादस्सुरापानसमं त्रयम् ॥
प्राणाहुतौ घृताभावे पश्चात् भुञ्जीत नो घृतम् ।
प्राग्घृते घृतसद्भावे भुक्तिमध्येन दुष्यति ॥ इति ।

हारीतः —

पञ्चप्राणाहुतीः कुर्यात् शुद्धान्नैरभिघारितैः ।
उच्छिष्टेन घृतं दद्यात् प्राग्घृतेर्लवणान्वितम् ॥ इति ।

व्यासोऽपि —

प्राणाग्निहोत्रं शुद्धान्नैर्लवणव्यञ्जनोत्तितैः ।
कुर्यात् प्राणाहुतेरन्ननिगरेन्नतु चर्वयेत् ॥ इति ।

स एव —

प्राङ्मुखोऽन्नानि भुञ्जीत सूर्याभिमुख एव वा ।
आसीनस्त्वासने शुद्धे भूम्यां पादौ निधाय च ॥ इति ।

अत्रिरपि —

आसनारूढपादस्तु ब्राह्मणो यस्तु भुञ्जते ।
मुखेन निर्मितश्चान्नं तुल्यं गोमांसभक्षणे ॥ इति ।

अन्यत्र तु —

प्राङ्मुखो भोजनं कुर्यात् प्रतीचिं वा यथासुखम्
उत्तरं पितृकार्ये च दक्षिणन्तु विवर्जयेत् ॥ इति ।

प्रतीचिं वेति सायङ्कालाभिप्रायः । यशस्यं दक्षिणाभिमुखमिति मनुवचनम् ।

काम्यभोजनविषयसंग्रहे —

गृहीत्वापोऽशनं नस्ते पात्रे चैव तिलोदकम् ।
पूरणञ्चेत् पुनः कुर्यात् सुरापानसमं भवेत् ॥ इति ।

भोजने वाचन्निषेधति मनुः—

स्नास्यतो वरुणश्शक्ति जुह्वतोऽग्निश्श्रियंहरेत्
भुञ्जतो मृत्युरायुष्यं तस्मान्मौनं त्रिषु स्मृतम् ॥ इति ।

स्मृत्यर्थसारे —

अन्नस्य वा निषेधार्थं उपदंशस्य वा पुनः ।
धर्मार्थं विसृजेद्वाचं नासद्वाचं कदाचन ॥ इति ।

शाण्डिल्यः —

तावत्संभोजने मौनं कुटुंबाश्रमवासिनां ।
वाचोपचारः कर्तव्यो भुञ्जता सह भोजने ॥ इति ।

स्मृतिरत्नावल्याम् —

प्राणाग्निहोत्रादन्यत्र नैव मौनं समाचरेत् ।
यदि भुञ्जीत तूष्णीन्तु सर्वत्रैव तु भोजने ॥
स पापः पितरं हन्ति सन्ततिश्चाचिरात्स्वयम् ॥ इति ।

अस्य वचनस्य सहभोजने प्राणाहुतिभ्यः परं वाचा उपचारः कर्तव्य एवेति तात्पर्यम् । तथापि नासद्वाचं विसृजेदिति बहुस्मृतिषु दृश्यते च ॥

व्यासः —

मौनी वाप्यथवा मौनी प्रहृष्टस्संयतेन्द्रियः ।
भुञ्जीत विधिवद्विप्र — इति ॥ स एव-
अनारोग्यमनायुष्यमस्वर्ग्यञ्चातिभोजनम् ।
अपुण्यं लोकविद्विष्टन्तस्मात्तत्परिवर्जयेत् ॥
द्वात्रिंशत् ग्रासमश्नीयात् दीर्घमायुर्जिजीविषुः । इति ।

आपस्तम्बः —

अष्टौ ग्रासा मुनेरुक्ताष्षोडशारण्यवासिनः ।
द्वात्रिंशत् गृहस्थस्य यथेष्टं ब्रह्मचारिणः ॥ इति

व्यासः —

वक्त्रप्रमाणं पिण्डांस्तु ग्रासेदेकैकशः पुनः ।
वक्त्राधिकन्तु यत् पिण्डमात्मोच्छिष्टन्तदुच्यते ॥
सदा चात्यशनन्नाद्यान्नातिहीनन्नकर्हिचित् ॥ इति ।
अङ्गेनारोपयेत् पादं पाणिना नाक्रमेत् भुवम् ॥
इति याज्ञवल्कः ॥

शातातपयः —

उद्धृत्य वामहस्तेन यत्तोयं पिबति द्विजः ।
सुरापानेन तत्तुल्यं मनुराह प्रजापतिः ॥ इति ।

व्यासः —

हस्ते चविद्यमाने तु ब्राह्मणो ज्ञानदुर्लभः
तोयं पिबति वक्त्रेण श्वानयोनिं पतत्यधः ॥ इति ।

यमोपि—

न हस्तेन पिबेत्तोयं भुक्तौ तु द्विजसत्तमः ।
अन्येन कांस्यपात्रेण पिबेदन्यैश्च साधनैः ॥ इति

आपस्तंबः —

घृतन्तैलञ्च लवणं पानीयं पायसन्तथा ।
भिक्षा च हस्तदत्ता तु न ग्राह्या यत्र कुत्रचित् ॥
तस्मादन्तर्हितश्चान्नं पर्णेन च तृणेन वा ।
प्रदद्यान्नतु हस्तेन नायसेन कदाचन ॥ इति ।

५९ स्मृत्यन्तरे —

न पङ्क्तावसमन्दद्यात् याचयेन्नतुदापयेत् ।
याचिता दापिता दाता व्रजन्ति नरकं ध्रुवम् ॥ इति

यस्त्वेकपङ्क्त्वावसमं ददाति
स्नेहाद्भयाद्वा यदिवार्थहेतोः।
वेदेषु गीतामृषिभिश्च दृष्ट्वा
तां ब्रह्महत्यां मुनयो वदन्ति ॥

इत्यन्यत्र च ॥

६० पराशरः —

अग्निना भस्मना चैव स्तम्भेन सलिलेन च।
द्वारेण चैव मार्गेण पङ्क्तिभेदो बुधैः स्मृतः ॥ इति।

शातातपः —

अग्रासने निविष्टस्तु यो भुङ्क्ते प्रथमन्द्विजः।
बहूनां पश्यतां सोऽज्ञः पङ्क्त्या हरति किल्बिषम् ॥ इति।

स्मृत्यन्तरे —

ग्रासशेषश्च नाश्नीयात् पीतशेषं पिबेन्न च।
शाकमूलफलेक्षूणां दन्तछेदैः न भक्षयेत् ॥

६१ बहूनां भुञ्जतां मध्ये न चाश्नीयात्त्वरान्वितः।
वृथा न विकिरेदन्नन्नोच्छिष्टः कुत्रचिद्व्रजेत् ॥
नस्पृशेद्वामहस्तेन भुञ्जानोऽन्नं कदाचन। इति।

६२ देवलः—

अवलीढांश्च मार्जारध्वांक्षकुक्कुटमूषिकैः।
भोजने नोपयुञ्जीत तदमेध्यं हि सर्वतः ॥ इति।

वृद्धहारीतः—

सकांस्यन्नालिकेराम्बु कांस्ये च रसमैक्षवम्
घृतं लवणसंयुक्तं सुराकल्पं विवर्जयेत्।
प्रत्यक्षलवणन्नाद्यात् पक्वं परगृहागतम्। इति।

प्रश्नप्रभवं सर्वं हिम्गुद्रव्यं विनैव तु ।
भूतृणं शिग्रुकञ्चैव ब्राह्मणो नैव भोजयेत् ।
तैलयन्त्रेषु यन्त्रादेश्शब्दो यावत् प्रवर्तते ।
तावत्कालन्न भोक्तव्यं शूद्रस्य पतितस्य च ।

इति स्मृतिरत्ने ।

काहलभ्रमणं ग्रावृणां चक्रस्योलूखलस्य च ।
एतेषान्निनदो यावत् यावत्कालमभोजनम् ॥

इति । स्मृत्यन्तरे ।

न भार्यादर्शनेऽश्नीयात् इति याज्ञवल्क्यः । अवीर्यवदपत्योत्पत्तिभयात् ।

बृहद्यमः —

माता वा भगिनी वापि भार्या वाऽन्यांश्च योषितः
न ताभिस्सह भोक्तव्यं भुक्त्वा चान्द्रायणञ्चरेत् ॥

इति ।

आदित्यपुराणेऽपि—

ब्राह्मण्या भार्यया सार्धं क्वचित् भुञ्जीत वाऽध्वनि ।
अधोवर्णस्त्रिया सार्धं भुक्त्वा पतति तत्क्षणात् ॥ इति ।

स्मृत्यन्तरे—

चण्डालं पतितं श्वानमुदक्यां सूतिकां तथा ।
दृष्ट्वा भुक्त्यन्तरे स्नात्वा मानस्तोकमृचञ्जपेत् ॥

उदक्या = रजस्वला ॥

एकपङ्क्तौ तु भुञ्जानं उच्छिष्टं संस्पृशेद्यदि ।
विसृज्यान्नं ततः स्नायात् भुक्त्वा चान्द्रायणञ्चरेत् । इति ।

बौधायनः

उत्सृज्य प्रोक्ष्य शेषं भोज्यमिति। केशकीटनखरोमाखुपुरीषाणि दृष्ट्वा तावन्मात्रमन्नं उत्सृज्य प्रोक्ष्य शेषं भोज्यमिति।

शाकं पुनश्चीतं वह्नौ जले क्षिप्तं तथौदनम्
तीर्थं पर्युषितं भोज्यं यच्चात्यन्तरे।

व्याघ्रपादः --

धात्रीफलं सदा यस्तु भक्षयेदप्रमादतः।
तस्य नारायणो देवः परमात्मा प्रसीदति॥ इति।

पुराणान्तरे—

अतसी तुलसी चैव धात्रीफलमथाच्युतम्।
यस्योदरे प्रवर्तन्ते तस्य सन्निहितो हरिः॥ इति।

अथ वर्जनीयान्नान्याह—

मनुः —

मत्तः क्रुद्धातुराणाञ्च न भुञ्जीत कदाचन।
गणान्नं गणिकान्नञ्च विदुषां यज्जुगुप्सितम्॥

स्तेनगायकयोश्चान्नं तीक्ष्णं वार्धुषिकस्य च।
दीक्षितस्य कदर्यस्य बुद्धस्य निगलेन च।
अभिशस्तस्य षण्डस्य पुंश्चल्या डंभितस्य च।
चिकित्सकस्य मृगयोः क्रूरस्योच्छिष्टभोजिनः॥

उग्रान्नं सूतकान्नञ्च पर्यायान्नमनिर्दिशम्।
अनर्चितं वृथा मांसं अवीरायाश्च योषितः।

द्विषदन्नं नागर्यन्नं पतितान्नमवक्षुतम्।
पिशुनानृतयोश्चान्नं क्रतुविक्रयकस्य च॥

शैलूषतन्तुवायान्नं कृतघ्नस्यान्नमेवच।
कर्मारस्य निषादस्य रंगावतरकस्य च॥

श्वपातां शुण्डिकानाञ्च चेलनिर्णेजकस्य च ।
सुवर्णकर्तुर्वेनस्य शास्त्रविक्रयणस्तथा ॥

रजकस्य नृशंसस्य यस्य चोपपतिर्गृहे ।
दुष्यन्ति ये चोपपतिं स्त्रीजितान्नञ्च सर्वशः ॥

अनिर्दिशञ्च प्रेतान्नमतुष्टकरमेव च ।
राजान्नं तेज आदत्ते शूद्रान्नं ब्रह्मवर्चसम् ॥

आयुस्सुवर्णकारान्नं यशश्चर्मावकृन्तिनः ।
कारुकान्नं प्रजां हन्ति बलं निर्णेजकस्य च ।
गणान्नं गणिकान्नं च लोकेभ्यः परिकृन्तति ॥

पूयं चिकित्सकस्यान्नं पुंश्चल्यास्त्वन्नमिन्द्रियम् ।
विष्ठावार्धुषिकस्यान्नं शास्त्रविक्रयिणो मलम् ॥

य एतेऽन्येत्वभोज्यान्नाः क्रमशः परिकीर्तिताः ।
एतेष्वेकतरस्यान्नं भुक्त्वा कृच्छ्रं समाचरेत् ॥ इति ।

स्मृत्यन्तरे—

ब्राह्मणस्य सदाश्नीयात् क्षत्रियस्य तु पर्वसु ।
उत्सवेषु तु वैश्यस्य शूद्रस्य न कदाचन ॥ इति ।

गृहे इति सर्वत्रापि योजनीयम् ॥

स्मृत्यन्तरे—

शूद्रान्नरसपुष्टस्य ह्यधीयानस्य नित्यशः ।
जपतो जुह्वतो वापि गतिरूर्ध्वा न विद्यते ॥

स्मृतिरत्ने—

शूद्रान्नं शूद्रसंपर्कं शूद्रेण तु सहासनम् ।
शूद्रात् ज्ञानागमश्चापि ज्वलन्तमपि पातयेत् ॥

मृतसूतकपुष्टाङ्गं द्विजं शूद्रान्नभोजिनम् ।
अहं तन्न विजानामि कां कां योनिं गमिष्यति ॥

गृध्रो द्वादशजन्मानि दशजन्मानि सूकरः ।
श्वयोनौ सप्तजन्म स्यादित्येवं मनुरब्रवीत् ॥
शूद्रान्नेन तु भुक्तेन जठरस्थेन यो मृतः ।
स वै खरत्वमुष्ट्रत्वं शूद्रत्वञ्चोपगच्छति ॥ इति ।

स्मृतिभास्करे तु—

षण्मासान् यो द्विजो भुङ्क्ते शूद्रस्यान्नं विगर्हितम् ।
स तदैव भवेच्छूद्रो मृतश्चाचाभिजायते ॥ इति ।

संग्रहे :—

हैयङ्गवीनं गोक्षीरं पिण्याकदधिसक्तव : ।
स्नेहं पक्वञ्च तक्रञ्च शूद्रादपि न दुष्यति ॥ इति ।

शातातप :—

तैलं घृतं दधि क्षीरं गवार्थे तु विशेषत : ।
श्रोत्रियेण तु भोक्तव्यं तथैवेक्षुरसंगुलम् ॥
शूद्रभाण्डस्थितं तक्रं तथा मधु न दुष्यति ॥ इति ।

पराशर :—

द्विजशुश्रूषणरतान् मद्यमांसविवर्जितान्
स्वकर्मनिरतान् नित्यं न शूद्रान् सन्त्यजेद्द्विज :
मद्यमांसरतं नित्यं नीचकर्मप्रवर्तकम् ।
तं शूद्रं वर्जयेद्विप्र श्वपाकमिव दूरत : ॥ इति ।

६३ अथ भोजनविधि : —

याज्ञवल्क्य : —

अमन्त्रं वाथ कांस्यं वा राजतं वा हिरण्मयम्
तानि पात्राणि सर्वेषां यथाविभवमाचरेत् ॥ इति ।

कांस्यपात्रं गृहस्थैकविषयम् ।

तदाह प्रचेता : —

तांबूलाभ्यञ्जने चैव कांस्यपात्रे च भोजनम् ।
यतिश्च ब्रह्मचारी च विधवा च विवर्जयेत् ॥ इति ।

बैठीनसीरपि : —

य इच्छत्यूर्ध्वगामित्वं परं स्थानं च शाश्वतम् ।
पद्मपत्रेषु भोक्तव्यम् मासमेकन्निरन्तरम् ॥
सौवर्णे राजते ताम्रे पद्मपत्रपलाशयोः ।
भोजने भोजने चैव त्रिरात्रफलमश्नुते ॥
सौवर्णं राजतं वापि शूद्रपात्रन्तु स्पृशेत् ।
इतरेषान्तु शुद्धिः स्यात् तापघर्षणतस्तथा । इति
अग्नौ तापनं तापः । शास्त्रैर्निष्कर्षो घर्षणम् ॥

६४ अथ तीर्थयात्राविधिः ॥

तत्र भरद्वाज : —

चान्द्रायणत्रयं कृत्वा गायत्र्या अयुतत्रयम् ।
आप्लावनं महानद्यां तुल्यमेतत्त्रयं विदुः ॥
उद्भूत्वा भूधरेऽम्भोधिं प्रविशत्यम्बुसन्ततिः
या सा महानदी ज्ञेया सर्वपापप्रणाशिनी ॥ इति ॥

महाभारते—

अश्वत्थसागरौ सेव्यौ न स्पृष्टव्यौ कदाचन ।
अश्वत्थं मन्दवारे तु सागरं पर्वणि स्पृशेत् ॥ इति ।

व्यासः —

छत्रञ्च हरते पादं अर्धं हरति पादुका ।
दानं हरेत् त्रिपादन्तु सर्वं हरति डोलिका ॥
ऐश्वर्यान्मोहलोभाद्वा गच्छेद्यानादिभिस्तु यः
निष्फलन्तस्य तत्तीर्थं तस्माद्यानादि वर्जयेत् ॥ इति ।

वैठीनसीरपि—

षोडशांशं स लभते यः परार्थे न गच्छति।
अर्धन्तीर्थफलन्तस्य यः प्रसङ्गेन गच्छति ॥ इति।

वृद्धवसिष्ठः —

पितरं मातरं वापि भ्रातरं सुहृदं गुरुम्।
निमज्जेत्तु य उद्दिश्य द्वादशांशं लभेत सः।
तत्प्राथिताष्टमांशं स लभेत् स्नानफलं नरः ॥ इति।

स्मृत्यन्तरे —

देवतानां गुरुणां च मातापित्रोस्तथैव च।
पुण्यं देयं प्रयत्नेन नापुण्यं चोदितं क्वचित् ॥ इति।

अत्रोक्तेभ्योऽन्येभ्यः सुकृतफलं न दद्यात् कस्यापि न विक्रीणीया-
दित्यापस्तंबवचनम्।

शाण्डिल्यः —

पृथिव्यां यानि तीर्थानि तानि सर्वाणि सागरे।
सागरे यानि तानि स्युः पादे विप्रस्य दक्षिणे ॥ इति।

आश्वमेधीये—

आस्ते हरिरचिन्त्यात्मा यत्रैव मधुसूदनः।
तत्तीर्थन्तत्परं ब्रह्म तत्पुण्यं तत्तपोत्रनम् ॥ इति।

६५ अथ माघस्नानविधिः ॥

विष्णुः —

पौषफाल्गुनयोर्मध्ये प्रातस्नायी सदा भवेत्।
दर्शं वा पौर्णमासीं वा प्रारभ्य स्नानमाचरेत्।
पुण्यान्यहानि त्रिंशत्तु मकरस्थे दिवाकरे ॥ इति।

तत्र माघस्नानस्य चान्द्रमानत्वात् तन्मासाद्यन्तं सूर्यस्य मकरराशिस्थितेर्नैव व्यवस्था। अतो माघमासि यावत्काल सूर्यो मकरराशिस्थो भवति तावत्कलमत्यन्तं मुख्यमिति तात्पर्यः।

स एव—

बालाश्च तरुणा वृद्धा नरनारी नपुंसकाः।
स्नात्वा माघे शुभे तीर्थे प्राप्नुवन्तीप्सितं फलम् ॥
माघमास्युषसि स्नात्वा विष्णुलोकं स गच्छाति।
मकरस्थे रवौ यो हि न स्नात्यनुदिते रवौ ॥
कथं पापैः प्रमुच्येत कथंस त्रिदिवं व्रजेत् ॥ इति।
अनेन माघस्नानमुदयात्पूर्वं कर्तव्यमिति प्राप्तम् ॥

भारते तु—

किञ्चिदभ्युदिते सूर्ये माघस्नानं समाचरेत्।
यस्तस्य सर्वपापानि विनश्यन्ति न संशयः ॥
माघमासिरटन्त्यापः किञ्चिदभ्युदिते रवौ।
ब्रह्मघ्नं वा सुरापं वा संपतन्तं पुनीमहे ॥ इति।
रटन्ति—रटशब्देह उच्चैर्वदन्तीत्यर्थः।
एतत्सर्वं सन्ध्योपासनारहितजनविषयम् ॥

तत्र स्मृत्यन्तरे—

उषस्युपोदये माघे स्नानमाहुर्द्विजन्मनाम्
स्त्रीशूद्राणां तथान्येषां अर्धोदय उपोदये ॥

इति ॥ उपोदये—उदयानन्तरमेव न पुनः कालविलम्बः। उषोदयस्सम्यक् प्रकाशारम्भः। तत्र द्विजन्मनां आसूर्यदर्शनात् गायत्रीजपस्य विहितत्तात् गायत्रीजपानन्तरं प्रणवजपसमापनो-द्वासनादि कर्तव्यत्वाच्च काम्येन माघस्नानेन हेतुना नित्यस्य सन्ध्यावन्दनादिकस्य विहितकालोल्लङ्घनाशक्यत्वाच्च।

तत्र माघस्नाने विशेष उक्तः स्मृत्यन्तरे—

विचेयतारके काले नित्यस्नानं विधीयते।
पुनरभ्युदिते सूर्ये माघस्नानं समाचरेत् ॥
अध्यर्धघटिकापूर्वं परं सूर्योदयात्तथा।
स कालोऽभ्युदितो नाम धर्मशास्त्रे प्रकीर्तितः। इति

अध्यर्धं — सैकार्धम् ॥

अथ रजस्वलाचारः ॥

तत्र याज्ञवल्क्यः-

हस्तेऽश्नीयान्मृण्मये वा हविर्भुक् क्षितिशायिनी।
रजस्वला चतुर्थेऽह्नि स्नात्वा शुद्धिमवाप्नुयात् ॥ इति

पद्धतौ: —

त्रिरात्रञ्च व्रतं कृत्वा श्रुतिस्मृतिसमीरितम्।
चतुर्थसंगवेस्नात्वा स्त्रीधर्मन्तु समाचरेत् ॥ इति।

सङ्ग्रहे—

मृतौ च सूतके चान्ते सङ्गवे स्नानमाचरेत्।
सङ्गवात्परतस्नानमार्तवेषु विशिष्यते ॥ इति।

सङ्गवः पूर्वाह्नः।

अङ्गिराः —

साध्वाचारा न तावत् सा स्नातापि स्त्री रजस्वला।
यावत्प्रवर्तमानं हि रजोऽस्य न निवर्तते ॥ इति।

साध्वाचारादेव कार्ययोग्या स्नाता रजस्वला या चतुर्थेऽह्नि शुध्यतीति पराशरस्मरणात् स्पर्शयोग्या भवतीत्यर्थः

स्मृत्यर्थसारे—

रजस्वला चतुर्थेऽह्नि षष्टि मृत्तिकाभिः, विधवा चेत् तद्द्विगुण-मृत्तिकाभिः शौचं कृत्वा दन्तधावनपूर्वकं सङ्गवे सचेलं स्नाया-दिति ।

स्मृत्यन्तरे—

सङ्गवान्ते चतुर्थेऽह्नि स्नानात् शुद्धिमवाप्नुयात् ।
एकविंशतिधा लिप्य सर्वाङ्गं शुद्धया मृदा ॥
कृत्ता स्नानशतं पश्चात् शुचिर्भवति नान्यथा ॥ इति ।

तत्र नैमित्तिकस्नानविषये—

बौधायनः —

रजस्वला तु संस्पृष्ट्वा चण्डालान्त्यश्व वायसैः
तावत्तिष्ठेन्निराहारा यावत्कालं न शुद्ध्यति ॥
रजस्वला तु भुञ्जानाश्चान्त्यजादीन् स्पृशेद्यदि ।
गोमूत्रयावकाहारा षड्रात्रेण विशुद्ध्यति ॥
अशक्तो काञ्चनं दद्याद्विप्रेभ्यो वापि भोजनम् ॥ इति ।

भृगुः —

सूतकं प्रेतकं स्पृष्ट्वा श्रुत्वा बन्धुषु मारणम् ।
आस्नानकालान्नाश्नीयात् पञ्चगव्यं ततः पिबेत् ॥ इति ।

स्मृत्यन्तरे—

आर्तवाभिप्लुतायास्तु शापा शौचं भवेद्यदि ।
सूतकं वा भवेन्मध्ये स्नात्वा भोजनमिष्यते ॥ इति ।

तत् स्नानप्रकारमाह पराशरः —

स्नाने नैमित्तिके प्राप्ते नारी यदि रजस्वला ।
पात्रान्तरिततोयेन स्नानं कृत्वा व्रतञ्चरेत् ॥

सिक्तगात्रा भवेदद्भिस्साङ्गोपाङ्गङ्कथञ्चन ।
न वस्त्रपीडनं कुर्यात् नान्यद्वासश्च धारयेत् ॥

मृतसूतकमध्ये तु रजो दृष्ट्वा कथं भवेत् ।
ब्राह्मणानां करैर्मुक्तन्तोयं शिरसि धारयेत् ॥

सर्वतीर्थजलाच्छ्रेष्ठं तोयं विप्रकरच्युतम् ।
दद्याच्छक्त्या ततो दानं पुण्याहेन विशुद्धयति ॥

स्पृष्ट्वा रजस्वलान्योन्यं ब्राह्मणीब्राह्मणी तथा ।
तावत्तिष्ठेन्निराहारा त्रिरात्रेणैव शुद्ध्यति ॥
अनेन स्वजातीययोरन्योन्यस्पर्शश्चातुर्वर्ण्यस्यापि व्याख्यातः।
स्पृष्ट्वा रजस्वलान्योन्यं ब्राह्मणी शूद्रजा तथा ।
कृच्छ्रेण शुद्ध्यते पूर्वा शूद्रा दानेन शुद्ध्यति ॥

स्मृत्यन्तरे:—

स्पृष्टे रजस्वलेऽन्योन्यं सगोत्रे चैकभर्तृके ।
कामतो कामतो वापि त्रिरात्रेणैव शुद्धयति ॥ इति

त्रिरात्रोपवासेनेत्यर्थः ।

रजो दृष्ट्वा तुरीयाहात् पूर्वं या स्नानमाचरेत् ।
सा निमज्जति वर्षाणामर्बुदन्नरकार्णवे ॥ इति ॥

६६ आतुरस्नानविधिः

अथातुरविषयस्नानमाह पराशरः—

आतुरस्नान उत्पन्ने दशकृत्वोह्यनातुरः ।
स्नात्वा स्नात्वा स्पृशेदेनं ततश्शुध्येत् स आतुरः ॥ इति ।
तत्र प्रतिस्नाने आतुरस्य वासोऽपि परिर्तनीयम् ।

उशनाः —

ज्वराभिभूता या नारी रजसा विपरिप्लुता ।
कथन्तस्य भवेच्छौचं शूद्धिः स्यात् केन कर्मणा ॥

चतुर्थेऽहनिसम्प्राप्ते स्पृशेदन्या तु तां स्त्रियम्।
सा सचेलावगाह्यापः स्नात्वा स्नात्वापुनस्पृशेत्।
दशद्वादशकृत्वो वा ह्याचमेच्च पुनः पुनः।
अन्यान्यानि च वासांसि ततश्शुद्धा भवेत्तु सा॥
दद्याच्छक्त्या ततो दानं पुण्याहेन विशुद्ध्यति॥ इति

६७ अशुचिस्पर्शनविषयम् —

तत्र याज्ञवल्क्यः—

तूष्णीमेवावगाहेत यदा स्यादशुचिर्नरः।
आचम्य प्रयतः पश्चात् स्नानं विधिवदाचरेत्॥ इति

६८ अत्र विदुषस्पर्शने दोषाभावः—

शातातपः—

मार्गे तु यत्र संस्पृष्टिर्यात्रायां कलहादिषु।
ग्रामसन्दूषणे चैव स्पृष्टिदोषो न विद्यते॥ इति।

बृहस्पतिः—

तीर्थे विवाहे यात्रायां सङ्ग्रामे देशविप्लवे।
नगरग्रामदाहे च स्पृष्टास्पृष्टिर्न दुष्यति॥ इति।

पराशरः —

मार्जारमक्षिकाकीटाः पतङ्गाः कृमिदर्दुराः।
मेध्यामेध्यं स्पृशन्तोऽपि नोच्छिष्टं मनुरब्रवीत्॥ इति॥

शक्तिविषये न मुहूर्तमप्यप्रयतस्यात् इत्यापस्तम्बः।

संग्रहे—

गौल्या स्पर्शनमात्रेण सरटीकृकलासयोः।
शुभेवाप्यशुभे वापि सचेलस्नानमाचरेत्॥ इति।

मनुः —

दिवा कीर्तिमुदक्याञ्च सूतिकां पतितन्तथा ।
शवन्तत्स्पृष्टिनञ्चैव स्पृष्ट्वा स्नानेन शुद्धयति ॥

इति । तथैव गौतमकात्यायनावपि ।

उदक्या — रजस्वला । चन्द्रिकायामप्येवमेव ॥

६१ चण्डालादीनांविप्रकर्षणप्रमाणम् ॥

पराशरः —

युगं युगद्वयञ्चापि त्रियुगञ्च चतुर्युगम् ।
चण्डालसूतिकोदक्या पतितानामधः क्रमात् ॥
ततः सन्निधिमात्रेण सचेलस्नानमाचरेत् ।
स्नात्वावलोकयेत्सूर्यं अज्ञानात्स्पर्शनो यदि ॥ इति ।

नवपदं - रथयुगम् । अष्टपदं अनोयुगम् ॥

स्मृत्यन्तरे —

वृषलश्चान्त्यजातिश्च चण्डालं पतितन्तथा ।
आर्तवाभिप्लुतान्नारीं स्पृष्ट्वा स्नानं समाचरेत् ॥
एकञ्च दशकञ्चैव द्वात्रिंशत्त्रिशतन्तथा ।
द्वात्रिंशच्च क्रमेणैव मज्जनन्तु विधीयते ॥ इति ।

शातातपः —

ऋतौ तु गर्भशङ्कित्वात् स्नानं मैथुनिनं स्मृतम् ।
अनृतौ तु यदा गच्छेत् शौचं मूत्रपुरीषवत् ॥ इति ।

## अथ मिश्रप्रकरणम् ।

७० प्राणायामप्रकार: ।

अङ्गुष्ठानामिकाभ्यान्तु तथैव च कनिष्ठया ।
प्राणायामस्तु कर्तव्यो मध्यमान्तर्जनीं विना ॥

तर्जनीमध्ययोर्योगं प्राणायामेतु वर्जयेत्
तर्जनीं मध्यमां स्पृष्ट्वा कुर्वन् शूद्रसमो भवेत् ॥
इति संवर्त्त: ॥

मनु: —

सव्याहृतीं सप्रणवां गायत्रीं शिरसा सह ।
त्रि: पठेदायत: प्राण: प्राणायामस्स उच्यते ॥

पठेत् मनसेति शेष: ॥

प्राणायामा ब्राह्मणस्य त्रयोपि विधिवत् कृता: ।
व्याहृतिप्रणवैर्युक्ता विज्ञेयं परमं तप: ॥ इति ।

यमोऽपि—

दशप्रणवसंयुक्तै: प्राणायामैश्चतुर्दशै: ।
मुच्यते ब्रह्महत्यायामासाच्चैवोपपातकै: ॥ इति ।

स्मृत्यन्तरे—

सव्याहृतीस्सप्रणवा: प्राणायामास्तु षोडश: ।
अपि भ्रूणहनं मासात् पुनन्त्यहरह: कृता ॥ इति ।

याज्ञवल्क्य: —

पूरक: कुम्भको रेच्य: प्राणायामस्त्रिलक्षण: ।
पूरके विष्णुसायूज्यं कुम्भके ब्रह्मणोऽन्तिकम् ॥

रेचकेन तृतीयेन प्राप्नुयादैश्वरं पदम् ।
इडया वायुमारोप्य बाह्यन्द्वादशमात्रकम् ॥

पूरयित्वादरन्तेन नासाग्रनयनद्वयः ।
ध्यायन् विरेचयेत्पश्चान्मन्दं पिङ्गलया पुनः ॥ इति ।

इडा—वामनाडी । पिङ्गला—दक्षिणनाडी

स्मृतिरत्ने—

दक्षिणे रेचकं कुर्याद्वामेनापूरितोदरम् ।
कुम्भकेन जपं कुर्यात् प्राणायामस्य लक्षणम् ॥

प्राणो वायुश्शरीरस्थ आयामस्तस्य निग्रहः ।
प्राणायाम इति प्रोक्तः ॥ इति ।

अत्रिः —

आकेशाग्रान्नखाग्रश्च निरोधश्शस्यते बुधैः ।
निरोधाज्जायते वायुः वायोरग्निश्च जायते ॥

अग्नेरापश्च जायन्ते ततोन्तश्शुध्यते त्रिभिः ।
शनैर्नासापुटैर्वायुमुत्सृजेन्न तु वेगातः ॥

न कम्पयेच्छरीरन्तु स योगी परमो मतः ।
नाभिमध्यस्थितन्ध्यायेत् कं रक्तं पूरकेण तु ॥

नीलोत्पलाभं हृत्पद्मे कुम्भकेन जनार्दनम् ।
ललाटस्थं शिवं श्वेतं रेचकेनाभिचिन्तयेत् ॥ इति ।

७२ निशास्नानविषयः—

पराशरः —

पुत्रजन्मनि यज्ञे च तथा सङ्क्रमणे रवेः ।
राहोश्च दर्शने स्नानं प्रशस्तं निशि नान्यथा ॥

यज्ञोऽवभृथः ॥

दिवा हृतन्तु यत्तोयं कृत्वा स्वर्णयुतन्तु तत् ।
रात्रौ स्नाने तु सम्प्राप्ते स्नायादनलसन्निधौ ॥ इति ।

स्मृत्यन्तरे—

अस्पृश्यस्पर्शने स्नानं निश्शुष्केन जलेन च ।
नद्यान्तास्तमिते स्नायाद्विशेषान्मध्ययामयोः ॥
अग्निं प्रज्वाल्य वा स्नायात् वाप्यादिषु महाजले ।
ब्राह्मणाग्निगवामग्रे स्नानं विज्ञाप्य बुद्धिमान् ॥
नक्तं स्नानञ्च दानञ्च कुर्यादग्निं समिध्य च ॥ इति ।

७३ नरकचतुर्दशीस्नानम् ॥

स्मृत्यर्थसारे—

यस्यां हतश्चतुर्दश्यां नरको विष्णुना निशि
तस्यामभ्यञ्जनङ्कार्यन्नरैः नरकभीरुभिः ॥ इति ।

स्मृमिरत्ने—

आश्चर्ययुक् कृष्णपक्षे तु चतुर्दश्यामिनोदये ।
तैलाभ्यङ्गेन कर्तव्यं स्नानमुष्णेन वारिणा ॥ इति ।

महाभारते—

मुच्यते सर्वपापेभ्यः स्नात्वैव लवणाम्भसि ।
गर्भिणी गृहणी यस्य दूरयात्रां सवर्जयेत् ॥
वपनं सागरस्नानं शवदाहञ्च वर्जयेत् ॥ इति ।

भरद्वाजः—

कृष्णाङ्गारचतुर्दश्यां योऽब्धौ स्नानं समाचरेत् ।
तस्य जन्मसहस्रेषु कृतं पापं विनश्यति ॥ इति ।

पुराणान्तरे—

सेतौ कवेरकन्यायां गङ्गायाश्चापि सङ्गमे ।
न वारदोषमीक्षेत पर्वसु स्नानमाचरेत् ॥ इति ।

चतुर्दश्यंशकं मुक्त्वा तत्र पर्वांश एव तु ।
सिन्धुस्नानं प्रकुर्वीत गङ्गास्नानफलं लभेत् ॥

इति भरद्वाजः ॥

जैमिनिरपि—

सेतुनापेक्षते कालं नित्यस्नानं प्रशंस्यते ।
निषेधः कालभेदश्च सेतोरन्यत्र कर्हिचित् ॥ इति ।

७४ केषाञ्चिद्दर्शनं पुण्यम् —

पराशरः —

अग्निचित् कपिला सत्री राजाभिक्षुर्महोदधिम् ।
दृष्टमात्राः पुनन्त्येते तस्मात् पश्येत्तु नित्यशः ॥ इति ।

व्यासः —

कुरुक्षेत्रं गयां गङ्गां प्रभासं नैमिशन्तथा ।
तीर्थान्येतानि सर्वाणि स्नानकाले स्मरेद्बुधः ॥ इति ।

एतद्वापीतटाकस्नानविषयम् ॥

तदाह देवलः —

एकान्नदीं समासाद्य नान्यां स्नाने नदीं स्मरेत् ।
यदि स्मरेत्तदा सम्यक् तस्य पुण्यं विनश्यति ॥ इति ।

७५ कदर्यवार्धुषिकदेवललक्षणम् ॥

स्मृत्यन्तरे—

स्वधर्मान् यस्समुत्सृज्य परधर्मं समाचरेत् ।
अनापदि तु विद्वद्भिः पतितस्स उदाहृतः ॥

देवत्यागी पितृत्यागी गुरुणामप्यपूजकः ।
गोब्राह्मणस्त्रीवधकृदपविद्धः प्रकीर्तितः ॥

आत्मानं धर्मकृत्यञ्च पुत्रदारांश्च पीडयेत् ।
लोभाद्यः पितरो भृत्यान् स कदर्य इति स्मृतः ॥

आत्मस्तुति परनिन्दाकर्ता च द्विजो निषिद्धया कृषिवाणिज्यादिवृत्या जीवन् वार्धुषिकस्मृतः। स हव्य कव्य बहिष्कृत एव।

देवार्चनपरो यस्तु वित्तार्थी वत्सरत्रयम् ।
स वै देवलको नाम हव्यकव्यबहिष्कृतः ॥

इति मन्त्रदेवताप्रकाशिकायाम् ॥

७६ शोषणादिना पापनाशनम् ॥

ब्रह्महत्याशिरस्कञ्च स्वर्णस्तेयभुजद्वयम् ।
सुरापानहृदायुक्तं गुरुकल्पकटिद्वयम् ॥

तत्संयोगिपदद्वन्द्वं प्रत्यङ्गसमपातकम् ।
उपपातकरोमाणं पिङ्गलश्मश्रुलोचनम् ॥

खड्गचर्मधरं कृष्णं कक्षौ पापं विचिन्तयेत् ।
एवं कुक्षिस्थं पापपुरुषं शोषणादिभिर्नाशयेत् ॥

७७ केषाञ्चित् भस्मरुद्राक्षयोरश्रद्धा

दुर्वाससो मुनेश्शापात् कुपितस्य महात्मनः ॥
कण्वशापात् भृगोश्शापाद् उपमन्योश्च शापातः ॥

विप्राणां दाक्षिणात्यानां पापोपहतचेतसाम् ।
शिवे भस्मनि रुद्राक्षे किञ्चिछ्रद्धा न लभ्यते ॥ इति ।

यावन्तः पतिता भूमौ भस्मनः परमाणवः ।
तावद्वर्षसहस्राणि रौरवन्नरकं व्रजेत् ॥ इति स्मृत्यन्तेर ॥

७१ रेखया गणनाप्रकारः—

रेखया जपप्रकारमाह शङ्खः—

प्रारभ्यानामिकायास्तु मध्यमे पर्वणि क्रमात् ।
तर्जनीमूलपर्यन्तं जपेद्दशसु पर्वसु ॥ इति ।

अस्यार्थः— दक्षिणकरस्य अनामिकाया मध्यमरेखां प्रथमं अङ्गुष्ठाग्रेण स्पृष्ट्वा ततः तस्य मूलरेखां ततः कनिष्ठिकामूल रेखादि प्रदक्षिणक्रमेण तर्जनीमूलरेखान्तं दशसु पर्वसुस्पृष्ट्वा जपेत् तदा दश संख्या भवतीत्यर्थः। तत्र मध्यमाङ्गुल्याः मध्यरेखा च मूलरेखा चेति रेखाद्वयं मेरुत्वेन परिकल्प्य तं मेरुमनतिक्रम्य तर्जनी मूलाङ्गुष्ठं पूर्वागतमार्गेणैव प्रतिलोममानीय पूर्वोक्तवदेव पुनः पुनर्जपः कर्तव्यः।

७९ अज्ञातरजस्कयास्पृष्टवस्तुविशेषः-

स्मृत्यन्तरे -

अविज्ञाते रजस्रावे मलवद्वस्त्रया गृहे।
स्पृष्टं यद्वस्तु तद्दुष्टं न दुष्टं सन्निकर्षतः॥ इति।

८० श्ववराहादि स्पर्शने—

संवर्तः —

श्ववराहखरानुष्ट्रान् वृकगोमायुवानरान्।
काककुक्कुटगृध्रांश्च स्पृष्ट्वा स्नानं समाचरेत्॥ इति।

८१ अन्त्यजच्छायास्पर्शने—

स्मृतिरत्ने—

छायामन्त्यश्वपाकादेः स्पृष्टवा स्नानं समाचरेत्।
चत्वारिंशत्पदादूर्ध्वं छायादोषो न विद्यते॥ इति।

८२ गोमयमन्त्रम्—

अथ गोमयमन्त्रः —

अग्रमग्रश्चरन्तीनामोषधीनां वने वने।
तासामृषभपत्नीनां सुरभीणां शरीरतः॥
उत्पन्नं लोकसौख्यार्थं पवित्रं कायशोधनम्।
त्वं मे शोकांश्च रोगांश्च पापानि नुद गोमय॥

८३ भक्ष्यवस्तुनि क्षुद्रोपघाते—
स्मृत्यर्थसारे—

भोजने केशकीटादि दूषिते तावन्मात्रमुत्सृज्य जलं भस्म मृदं वाऽक्षिप्त्वा भुञ्ज्यात् । मूखे दृष्टे निष्टिष्य घृतं प्राश्यात् । पाके केशकिटादि स्थिते त्याग एव । तस्य भुक्तावुपवास इति ।

पराशर: —

अन्नादौ कीटसंसर्गे मक्षिकाकेशदूषिते ।
तदन्तरा स्पृशेच्चापि तदन्नं भस्मना स्पृशेत् ॥ इति ।

स्मृत्यन्तरे—

पक्षिजग्धं गवाघ्रातमवधूतमवक्षुतम् ।
आहृतं केशकीटैश्च मृत्प्रक्षेपेण शुध्यति ॥ इति ।

अवधूतं-सम्मार्जनीरज: । पक्षवातादिदूषितं ॥ अवक्षुतं-अवाङ्मुखेन यत् क्षुतं तत् अवक्षुतम् ॥

८४ अभक्ष्यनिवृत्ते: फलम् ।
व्यास: —

अभक्ष्यस्यनिवृत्या तु पिनद्धंहृदयं भवेत् ।
आहारशुद्धौ चित्तस्य विशुद्धिर्भवतिस्वत ॥ इति

८५ क्षीरे लवणमित्यादिकनिपाद्वर्ज्यानि—
स्मृतिसारे—

क्षीरे तु लवणं दत्वा उच्छिष्टे पिचयत्धृतम्
स्नानं रजकतीर्थेषु ताम्रे गव्यं सुरासमम् ॥ इति ।
आमलक्या: फलं चैव जंबीरं तिन्त्रिणीफलम् ।
प्रज्ञा प्रतापलक्ष्मीवान् सदैतद्वर्जयेन्निशि ॥
नालिकेरोदकं कांस्ये ताम्रपात्रस्थितं मधु ।
ताम्रपात्रस्थितं गव्यं मद्यतुल्यं घृतं विना ॥
अपि प्रस्थानसमये रात्रौ दधी भक्षयेत् ।
मधुपर्कप्रदानं तु वर्जयित्वा विशेषत: ॥

८६ वेदानभ्यासाहारवर्जनान्नदोषफलम्—

व्यास: —

अनभ्यासेन वेदानामाचारस्यचवर्जनात् ।
आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसत: ॥ इति ।

८७ पुनरप्यभक्ष्याणि—

मनु: —

लशुनंग्रञ्जनं चैव पलण्डुकवकानि च ।
अभक्ष्याणिद्विजातीनाममेध्यप्रभवानि च ॥

लोहितान् वृक्षनिर्यासान् व्रश्चनप्रभवान्स्तथा ।
शेलुं गव्यश्च पीयूषं प्रयत्नेन विवर्जयेत् ॥ इति ।

लशुनं सुक्ष्मश्वेतकन्दनालम् ॥

ग्रञ्जनं पलण्डुविशेष: ॥ पलण्डुस्थूल कन्दो लशुनविशेष: । कवको भूमौ छत्राकारेण वर्षसूत्पन्नं सिलिन्ध्रम् ॥ लोहित-वृक्षनिर्यासा लाक्षादय: । लोहिताग्रहणात् हिंगुकर्पूरादेरप्रतिषेध: ॥ श्लुश्लेष्मातक: । पीयूषं अभिनबपय: ।

व्रश्चनप्रभवं सर्वं हिंगुद्रव्यं विनैव तु ।
भूतृणं शिग्रुकश्चैव ब्राह्मणो नैव भक्षयेत् ।

इति धर्मधारासुधासिन्धौ ॥ विष्णु:- वर्जयेच्छ्वेतवार्ताकं अलांबुवर्तुलं तथा । इति । रक्तशिग्रं परित्यजेत् ये भक्षयन्ति पिण्याकम् । ते वै निरयगामिन: इति स्मृत्यन्तरे ॥

निरयं—नरकम् ।

अन्यत्र तु—

सकण्टकन्तु कूश्माण्डं वृन्ताकं च सकण्टकम् ।
वर्जयेत् सर्वनिर्यासान् वृक्षवल्लिसमुद्भवान् ॥
निर्यासमपि वार्हिगुं धूपन्नपरिवर्जयेत् इति ।

शंखः —

अलांबुशिग्रुश्लेष्मातककोविदारासनचित्राकवृन्ताकभक्षणे पञ्चगव्यं पिबेत् ॥ इति ।

सुमन्तुः —

एतान्यन्यानि वा आतुरस्य भिषक्क्रियायाम् अप्रतिषिद्धानि भवन्ति यानिचान्यान्येवं प्रकाराणि तेष्वप्यदोष इति याज्ञवल्क्यः।

सन्धिन्यनिर्दिशा वत्सगोः पयः परिवर्जयेत् ।
औष्ट्रमेकशफं स्त्रैणं आरण्यकमथाविकम् ॥ इति ।

यावृषेण सन्धयते सा सन्धिनी । अनिर्दिशा अनियताका दोहना । अवत्सामृतवत्सेत्यर्थः ।

शंखः —

सर्वासां द्विस्तनीनां क्षीरमभोज्यं अजावर्जं इति ।

बौधायनः—

ओदनन्तु पुनः पक्वं नालिकेरजलं तथा ।
तोयमभूमिष्ठं ब्राह्मणो नैवभक्षयेत् ॥ इति ।

यमः —

किल्बिषं हि मनुष्याणामन्नमाश्रित्य तिष्ठति ।
योहियस्यान्नमश्नाति स तस्याश्नाति किल्बिषम् ॥ इति ।

भरद्वाजः ।

निराचारस्य विप्रस्य निषिद्धाचरणस्य च ।
अन्नं भुक्त्वा द्विजः कुर्यात् दिनमेकमभोजनम् ॥ इति ।

पराशरः —

सदाचारस्य विप्रस्य सदा वेदान्तवेदिनः ।
भुक्त्वाऽन्नं मुच्यते पापादहोरात्रान्तरान्नरः ॥ इति ।

शातातपः —

योहिहित्वा विवाहाग्नि गृहस्थ इति मन्यते ।
अन्नन्तस्य न भोक्तव्यं वृथा पाकोहि सस्मृतः ।

८९ अभक्ष्यभक्षणप्रायश्चित्तम् —

वृथापाकस्य भुक्त्वान्नं प्रायश्चित्तं चरेद्द्विजः
प्राणायामांस्त्रिरभ्यस्य घृतं प्राश्य विशुद्धयति । इति
अपरार्के

अभोज्यं ब्राह्मणस्यान्नं वृषलेन निमन्त्रितमिति ॥

स्मृति भास्करे —

सूतके मृतके भुक्त्वा गृहीते शशिभास्करे ।
जलादौ हस्ततो भुक्त्वानभूयः पुरुषो भवेत् ॥ इति ।

पराशरः —

शूद्रान्नं सूतकान्नञ्च अभोज्यस्यान्नमेवच ।
कृतञ्च प्रतिषिद्धान्नं पूर्वोच्छिष्टन्तथैव च ॥

यदि भुक्तन्तु विप्रेण अज्ञानादापदापिवा ।
ज्ञात्वा समाचरेत्कृच्छ्रं ब्रह्मकूर्चन्तु पावनम् ॥ इति ।

अज्ञाने च आपदि ब्रह्मकूर्चमित्यर्थः ।

स एव —

आपत्काले तु विप्रेण भुक्तं शूद्रगृहे यदि ।
मनस्तापेन शुध्येत त्रिपदां वा शतं जपेत् ॥

शुष्कान्नं गोरसं स्नेहं शूद्रगेहाद्यदागतम् ।
पक्त्वा विप्रगृहे भुक्तं भोज्यन्तन्मनुरब्रवीत् ॥ इति ।

शुष्कान्नं — तण्डुलादि ।

कलौ नास्ति तीर्थसेवा च दूरत इति ।

९० शूद्रश्च शूद्रेषुदासगोपालकुलमित्रार्ध सीरिणाम् ।
भोज्यान्नतौ कलौ नास्ति तीर्थसेवा च दूरतः ॥
इति स्मृत्यन्तरे ।

९१ यमः— कुत्रचिदभोजननिषेधः ॥
अल्पानामेव पयसां महत्सु न तु दूषणम् ।
अक्षोभ्यानामपां नास्ति प्रसृतानाञ्च धावताम् ॥
स्तोकानामुध्दृतानाञ्च दोषदुष्टत्वमिष्यते ।
अथाक्षोभ्य तटाकादिनदीवापी सरांसि च ॥
चण्डालाद्यचिरस्पर्शे तीर्थतः परिवर्जयेत् । इति ॥
तीर्थत्वेन वर्जयेदित्यर्थः ।

हारीतः —
अमेध्यरेतो गोमांसं चण्डालान्नमथापि वा ।
यदि भुक्तन्तु विप्रेण कृच्छ्रं चान्द्रायणं चरेत् ॥ इति ।
चतुर्विंशतिमतो विण्मूत्रभक्षणे विप्रश्चरेच्चान्द्रायणद्वयम्
श्वादीनाञ्चैव विण्मूत्रे चरेच्चान्द्रायणत्रयम् ॥ इति ॥

पराशरः—
अज्ञानाद् भुञ्जते विप्रस्सूतके मृतकेपि वा
प्रायश्चित्तं कथं तेषां वर्णे वर्णे विनिर्दिशेत् ।
गायत्र्याष्टसहस्रेण शुद्धिस्याच्छूद्र सूतके ।
वैश्यपञ्चसहस्रेण क्षत्रिये ब्राह्मणस्य च ॥
यदा भुक्तेत्तदा द्वे द्वे सहस्रे उपपादयेत् ।
अथवा वामदेव्येन साम्ना चैकेन शुध्यति ॥ इति ।

९२ कुत्रचिद्रात्रिभोजननिषेधः ।
शौनकः—
पर्वद्वये भानुवारे रात्रौ भुक्तेरकल्मषम् ।
स इद्वने जपेन्मन्त्रं शतं वै विष्णुमन्दिरे ॥

एकादश्यामहोरात्र भुंक्ते यदनुपापकृत् ।
आपः पृणीतमन्त्रश्च दशवारं न किल्बिषम् ।। इति ।

९६ ग्रहणविषयः—

व्यासः—

नाद्यात्सूर्यग्रहात्पूर्वं अह्नि सायं शशिग्रहात् ।
ग्रहकाले न चाश्नीयात् स्नात्वा भुञ्जीत मुक्तये ।
मुक्ते शशिनि भुञ्जीत यदि न स्यान्महानिशा ।
अमुक्तयोरस्तगयो रद्यादृष्ट्वापरेहनि ।।
सूर्यग्रहे तु नाश्नीयात् पूर्वयामचतुष्टयम् ।
चन्द्रग्रहे तु यामांस्त्रीन् बालवृद्धातुरैर्विना इति ।

बालवृद्धातुराणामेकयाममन्तरेण भोक्तव्यं इति स्मृतौ व्यवस्थापितम् मार्कण्डेयः ।

ग्रहणन्तु भवेदिन्दोः प्रथमादधियामतः ।
भुञ्जीतावर्तनात्पूर्वं प्रथमे प्रथमादधः ।।

व्यासोक्तमेव यामत्रयान्तरितं भोजनं कर्तव्यं इत्यर्थः ।

स एव—

रवौह्यावर्तनावदूर्ध्वं अर्वागेव निशीथतः ।
भुञ्जीतावर्तनात्पूर्वं प्रथमे प्रथमादधः ।। इति ।

एतदपि यामचतुष्कान्तरितभोजनाभिप्रायेणैवोक्तम् ।

९७ क्षीरविषये भक्ष्यत्वाभक्ष्यत्वविवेकः ।

मनुरपि—

अनिर्दशायागोक्षीरामौष्ट्रमेकशफन्तथा ।
आविकं सन्धिनीक्षीरं विवत्सायाश्च गोःपयः ।।

आरण्यानाञ्च सर्वासां मृगीणां महिषीर्विना ।
स्त्रीक्षीरञ्चैव वर्ज्यानि सर्वशुक्तानि चैवहि ॥

इति । शुक्तं-अत्यम्लम् ।

गौतमः —

स्यन्दिनीयमसूस्सन्धिनीनाञ्चेति । स्यन्दिनी स्रवत्पयस्तनी । यमसूः - शिशुद्वयप्रसवित्री ।

आपस्तंबः —

सन्धिन्या अनिर्दिशाया अवत्सायाश्च गोः क्षीरप्राशने प्राजापत्यं, उष्ट्रीखरीमानुषी क्षीरप्राशने पुरुषस्य पुनरुपनयनञ्चेति चतुर्विशतिमते ।

हस्तिक्षीरन्द्विजः पीत्वा कथञ्चित्कामममोहितः ।
पुनस्संस्कृत्य चात्मानं प्राजापत्यं समाचरेत् ॥

शंखोऽपि—

क्षीराणि यान्यपेयानि तद्विकाराशने बुधः ।
सप्तरात्रं व्रतं कुर्यात् प्रयत्नेन समाहितः ॥ इति ।

एतत्कामतो कामतो वा अभ्यासविषयम् ।

सकृत्पाने अत्रिः —

अपिकोष्ट्रीश्च यत्क्षीरं मृगाणां वनचारिणां
गायञ्च गार्दभं क्षीरं भुक्त्वा दिनमभोजनम् । इति ॥

गोजा महिषीवर्ज्यं सर्वपयांसि प्राश्योपासेदिति विष्णुः ॥

आपस्तंबः—

द्वावेवाश्रमिणौ भोज्यौ ब्रह्मचारी गृही तथ ।
मुनेरन्नभोज्यंस्यात् सर्वेषां लिङ्गिनान्तथा ॥

यत्यन्नं यतिपात्रस्थं यतिना प्रोक्षितं च यत् ।
अन्नत्रयं न भोक्तव्यं भुक्त्वा चान्द्रायणञ्चरेत् ॥ इति
लिङ्गिनः पाशुपतादयः ।

पराशरः—

चण्डालघटसंस्थन्तु यत्तोयंपिबति द्विजः ।
तत्क्षणात् क्षिपते यस्तु प्राजापत्यं समाचरेत् ॥
यदि न क्षिप्यते तोयं शरीरे यस्यजीर्यते,
प्राजापत्यन्न दातव्यं कृच्छ्रं सान्तपनञ्चरेत् ॥ इति ।

श्वसृगालादिमृगगणगोनरशवोपहतकूपतटाकादिस्थितजलपाने विप्रश्शुध्येत्त्रिरात्रेण क्षत्रियस्तु दिनत्रयम् । एकाहेन तु वैश्यस्तु शूद्रो नक्तेन शुध्यतीति पराशरः ।

९५ त्रिरात्रेण — त्रिरात्रोपवासेन । अन्नजरणार्थो मन्त्रः विष्णुपुराणे—

प्राणापानसमानानामुदानव्यानयोस्तथा ।
अन्नं पुष्टिकरञ्चास्तु ममास्त्वव्याहतं सुखम् ॥
अगस्त्यवह्नीब्रडवानलश्च भुक्तं मयान्नं जरयत्वशेषम् ।
सुखं च मे तत्परिणामसंभवं यच्छत्वरोगं मम चास्तु देहे ॥

९६ दिनचर्याक्रमः —

न सन्मार्गादविरोधिनादिनन्नयेत्तत्सन्ध्यां उपतिष्ठेत् समाहितः । इति ।

भुक्त्वा राजपदासीत गत्वा शतपदं शनैः । इति व्यासः ।
भुक्त्वा वै सुखमास्थाय तदन्नं परिणामयेत् ।
इतिहासपुराणाभ्यां वेदार्थानुपबृंहयेत् । इति लिखितः ।
भुक्त्वोपस्थाय मार्तण्डं पुराणानि सदा पठेत् ।
भावशुद्धा हरौ भक्तिः पुराणश्रवणाद् भवेदिति ।

अत्रिरपि:—

दिवास्वापन्नकुर्वीत गच्छेन्नैव दिवास्त्रियम्
आयु: क्षयकरीनिद्रा दिवास्त्रीपुण्यनाशिनी ॥ इति।

१८ तांबूलचर्वणविषय:

अखण्डादर्शे—

भुक्त्वा तु सुखमासीनस्तांबूलेनास्यशोधनं
सुपूगश्चसपत्रश्च चूर्णेन च समन्वितम् ।
प्रदद्याद्विजदेवेभ्यस्तांबूलं चर्वयेत्पुन: ।
एकपूगं सुखारोग्यं द्विपूगंनिष्फलं भवेत् ।
अतिश्रेष्ठंत्रिपूगन्तु अधिकं नैवदुष्यतीति ॥

पर्णमूले भवेद्व्याधि: पर्णाग्रे पापसंभव: ।
जीर्णं पित्तं हरस्यायु: सियबुध्दिविनाशिनी ।
तस्मादग्रश्चमूलश्चसिराश्चैव विशेषत: ।
जीर्णवर्णं वर्जयित्वा तांबूलं खादयेन्नर: ॥

अखण्डितश्च क्रमुकं पर्णमक्षालितन्तथा ।
अरोधितन्तथाचूर्णं भक्षयन् सर्वदोषभाक् ॥

अनिधायमुखे पर्णं पूगम् खादति योनर: ।
सप्तजन्मदरिद्रस्यात् नरकेषुनिमज्जति ॥

प्रात: कालेफलाधिक्यंचूर्णं मध्यन्दिनेऽधिकम् ।
सायं पर्णस्यचाधिक्यं त्रिधा तांबूलभक्षणम् ॥ इति ।

वाहटोऽपि:—

तांबूलं कटुतिक्तमुष्णमधुरं क्षारं कषायान्वितम्
वातघ्नं कृमिनाशनं कफहरं कायाग्निसन्दीपनम् ।
स्त्रीगंभापणभूषणम् रुचिकरं शोकस्य विच्छेदनम्
तांबूलस्य तु यत्र ये दशगुणास्वर्गेपि ते दुर्लभा ॥ इति।

प्रत्युषसि भुक्तसमये परयुवतीनां च संगमे। प्रथते राजनि विद्वन्मध्ये तांबूलं नात्तिचेत् स पुरुषपशुः। इति।

दन्तावटी दुर्घटताक्षीरोगं जडत्वमङ्गे नयनादिकेषु बलक्षयं वक्त्रगदं करोति तांबूलमत्यन्तनिषेवणेन।

आयुः प्रजाबलं बुद्धिरेतश्शक्तिर्विनश्यति।
जिह्वारसं न जानाति सदा तांबूलभक्षणात्॥ इति।

९७ स्वापविधिः —

आचारसारे—

प्राक्शिरास्तु स्वपेन्नित्यं तथा वै दक्षिणाशिराः।
उदक्शिरा न स्वपेत्तुतथा प्रत्यक्छिरा न च॥

गर्गः —

सुखानुकूले शयने वामपार्श्वेन साविशेत्।
आयुर्वामतरे प्रोक्तमुत्तानं बलवर्धनम्॥

स्वगृहेप्राक्शिराश्शेते परेषां दक्षिणा शिराः।
प्रत्यक्शिराः प्रवासे तु न कदाचिदुदक्शिराः॥ इति।

रत्नावल्याम्—

मांगल्यपूर्णकुम्भन्तु शिरस्थाने निधाय च।
वैदिकैर्गारुडैर्मन्त्रै रक्षां कृत्वा स्वपेन्निशि॥ इति।

गोभिलः —

अगस्त्यो माधवश्चैव मुचुकुन्दो महाबलः।
कपिलो मुनिरस्तीकः पञ्चैते सुखशायिनः॥ इति।

९८ सदाहारानुष्ठानफलम्—

मनुः —

वेदोदितं स्वकं कर्म सदा कुर्यादतन्द्रितः।
तद्धि कुर्वन् यथाशक्ति प्राप्नोति परमां गतिम्॥ इति।

१०० ऋतुकालगमनम् —

ऋतुकालागमी स्यात् स्वभावनिरतस्सदा ।
पर्ववर्जं व्रजेच्चैनां अनृतौ तु न काम्यया ॥

उपवीतीस्त्रियं गच्छेद्दतुकाले तु वै बुधः।
निवीतमनृतौ कुर्यात् तद्दोषस्य निवृत्तये ॥

अमुक्तवसनायोषीदमुक्तवसनः पुमान् ।
संविशेतामुभौ मुक्तवसनौ कलिराविशेत् ॥

दारप्रियैरलङ्कारैरलङ्कृत्य प्रसन्नधीः ।
प्रियासमीपे शयने संविशेत् प्रहरद्वयम् ॥ इति ।

१०१ दासगोपालादीनां लक्षणम्

पराशरः —

शूद्रकन्यासमुत्पन्नो ब्राह्मणेन तु संस्कृतः ।
संस्कारात् सभवेद्दासो ह्यसंस्कारात्तु ना पितः ॥

क्षत्रियाच्छूद्रकन्यायां सुतो जायेत नामतः ।
स गोपाल इति ज्ञेयो भोज्यो विप्रैर्नसंशयः ॥

वैश्यकन्यसमुद्भूतो ब्राह्मणेन तु संस्कृतः ।
सह्यार्धसीरी विज्ञेयो भोज्यो विप्रैर्नसंशयः ॥ इति ।

स्मृत्यन्तरे—

शूद्रेषु दासगोपालकुलमित्रार्धसीरिणाम् ।
भोज्यान्नन्तु कलौ नास्ति तीर्थसेवा च दूरतः ॥ इति ।

१०२ केषाञ्चित्पाकदोषाभावः —

स्मृत्यन्तरे—

हरिद्रा गोरसञ्चूर्णं लवणं धान्यमौषधम् ।
न तेषां पाकदोषोस्ति क्रमुकस्यगुलस्यच ॥ इति ।

व्यासः —

इत्येतदखिलेनोक्तमहन्यहनि वै मया ।
ब्राह्मणानां कृत्यजातमपवर्गफलप्रदम् ॥
नास्तिक्यादथवालस्यात् ब्राह्मणो न करोति यः ।
स याति नरकान् घोरान् काकयोनिषु जायते ॥
नान्योऽपि मुक्तये पन्था धर्मं मुक्त्वाश्रमा स्वकं ।
तस्मात् कर्माणि कुर्वीत तुष्टये परमेष्ठिनः ॥ इति ।

१०३ नैमित्तिकपुण्यस्नानम्—

पुष्ये च जन्मनक्षत्रे व्यतीपाते च वैधृते ।
अमायाश्च नदीस्नानं पुनात्यासप्तमङ्कुलम् ॥
रव्यंगारशनैर्वारे स्नानंकुर्वन्ति ये नराः ।
व्याधिभिस्ते न पीड्यन्ते मृगं केसरिणो यथा ॥
चैत्रे कृष्णचतुर्दश्यां यस्नायाच्छिवसन्निधौ ।
न प्रेतत्वमवाप्नोति गङ्गायाश्च विशेषतः ॥ इति ।

यमोपि—

सूर्यग्रहणतुल्यानु शुक्लामाघस्य सप्तमी ।
अरुणोदयवेलायान्तस्यां स्नानं महाफलमिति ॥

माधवीये—

गुरुवारेऽप्यमायाश्च अश्वत्थच्छायधारिणा ।
स्नानं प्रयागस्नानेन महापातकनाशनम् ॥ इति ॥
माहिषं क्षीरमाजं च गव्यं भक्ष्यं विनिर्दिशेत् ।
अमेध्येषुच ये वृक्षा उप्ता पुष्पफलोपगाः
तेषामपि न दुष्यन्ति पुष्पाणि च फलानि च ॥ इति मनुः ॥

संवर्तः —

शूद्रोच्छिष्टास्त्वपः पीत्वा कुशवारिपिबेत्त्र्यहम् ।
शूद्रोच्छिष्टजलं पीत्वा त्रिगत्रं यावकंपिबेत् ॥ इति ।

हारीत: —

स्व्युच्छिष्टसंस्थिता अपो यदि कश्चित् पिबेत्द्विज: ।
शंखपुष्प्यापि पक्वेन त्र्यहं क्षीरेण शुद्ध्यति ॥ इति ।

बृहद्विष्णु: —

ब्राह्मणे ब्राह्मणोच्छिष्टाशने महाव्याहृतिभि: अभिमन्त्र्याप पिबेदिति ।

२०४ बृहस्पति :

शूद्र भुक्त्वावशिष्टञ्चनाद्यात् भाण्डस्थितन्त्वपि
पात्रान्तरे निधायास्माद्दद्यान्निरवशेषत: । इति ।

भाण्डं पात्रं पाकपात्रात् पात्रान्तरे निधाय तत आदाय शूद्रादिभ्यो निरवशेषं दद्यात्एवञ्च सति पाकपात्रस्थं भोक्तव्यं इत्यर्थ : ।

शातातप:—

न पिबेन्नच भुञ्जीत द्विजस्सव्येन पाणिना ।
नैकहस्तेन च जलं शूद्रेणावर्जितं पिबेत् ॥
भुञ्जाने दक्षिणं बाहुं न संयुञ्ज्यात्कदाचन
उद्धृत्य वामहस्तेन तृ पार्तस्सलिलं पिबेत् ॥
वामेनैवपिबेत्तोयं भोजने पात्रमत्यजन्
त्यजन् पिबेत्तु रुधिरमत्यजन्नमृतं पिबेत् ॥
हस्तदत्तानिचान्नानि प्रत्यक्षलवणानि च
मृत्तिका भक्षणञ्चैव गोमांसस्याशनं स्मृतम् । इति
प्रत्यक्षलवणं चक्षुर्ग्राह्यम । अतो
हीन लवणादिषूपदंशादिषु तत्पात्रे एव
लवणं निधाय भोक्तव्यम् । न भोजनपात्रे इत्यर्थ : ।

तत्रापि प्राणाहुते: प्रागत्यन्तनिषेध : । अनुच्छिष्टे च लवणमित्यादि स्मृते: ।

व्यासः -

पानीयानि पिबेद्येन तत्पात्रं द्विजसत्तमः ।
अनुच्छिष्टं भवेत्तावत् यावत् भूमौ न निक्षिपेत्
पात्रशिष्टन्तुयत्तोयं भवेत् पादार्त्तने जने ।
भूमौ तदंबु निस्राव्य शिष्टं पात्रानमर्हति ।। इति

१०५ दर्व्या देयं घृतान्नञ्च समस्तव्यञ्जनानि च ।
तैलपक्वमपक्वान्नं न तु दर्व्या प्रदापयेत् ।।

रत्नावल्याम् —

अपक्वं स्नेहपक्व च हस्ते नैव प्रदापयेत् ।
यत्किञ्चिदिति तद्भक्ष्यं दद्याद्दर्व्या वनान्यथ ।। इति

पराशरः—

आयसेन तु पात्रेण यदन्नमुपदीयते ।
शुनोच्छिष्टमसौ भुञ्जे दाता तु नरकं व्रजेत् ।। इति ।

जायान्ते नाश्नीयादवीर्यवदपत्यं भवतीति श्रुति ।
नाश्नीयात् भार्यया सार्धमिति विष्णुः ।

स्मृतिरत्ने: —

त्रिः प्राश्नीयादपो यत्तु प्रीतास्तेनास्यदेवताः ।
ब्रह्माविष्णुर्महेशश्च भवन्तीत्यनुशुश्रुमः ।।
गंगा च यमुना चैव प्रीयेते परिमार्जनात् ।
संस्पृष्टयोर्लोचनयोः प्रीयेते शशिभास्करौ ।।
नासत्यदस्रौ प्रीयेते स्पृष्टे नासापुटद्वये ।
कर्णयोः स्पृष्टयोस्तद्वत् प्रीयेते चानलानिलौ ।।
संस्पृष्टे हृदयेचास्य प्रीयन्ते सर्वदेवताः ।
मूर्ध्निसंस्पर्शनादेव प्रीतस्तु पुरुषो भवेत् ।।
य एवं ब्राह्मणो नित्यमुपस्पर्शनमाचरेत् ।
ब्रह्मादिस्तम्बपर्यन्तं जगत्स परितर्पयेत् ।। इति ।

द्विरोष्ठौ परिमृजेत् सकृदुपस्पृशेदित्यापस्तंब : संवृत्यांगुष्ठमूलेन द्वि : प्रमृज्यात्ततो मुखं संहृताभिस्त्र तिसृभि : पूर्वमास्यं सकृत् पृशेदिति ।

दक्ष: –

तिसृभिर्मध्यमाभिर्मुखं पूर्वं समुपस्पृशेदिति ।

याज्ञवल्क्य: त्रिभिरास्यमुपस्पृशेदिति । ओष्ठाविति शेष : ।

हारीत : –

त्रिराचमेत् द्वि: परिमृज्य सकृदुपस्पृशेति ब्रह्मयज्ञप्रकरणे श्रूयते । द्वि: परिमृज्य ओष्ठाविति शेष: सकृदुपस्पर्शनमोष्ठयोरेव

१०९ प्रोक्षणमन्त्रार्थ :–

आपोहिष्ठेति अस्यार्थ : —

आप: यूयं मयोभुव: स्थमय इति सुखनाम । तस्य भवितव्य: स्थहि शब्द: । प्रसिद्धौ ता: यूयं न: अस्मान् चक्षसे — दर्शनाय । दधातनेत्यत्रापि योजनीयम् । ऊर्जे अन्नाय दधातन दत्त । अन्नं मह्यं दत्तेत्यर्थ : । महे महते रणाय रमणीयाय, चक्षसे— दर्शनाय, दधातनेत्यत्रापि योजनीयम् । महत् रमणीयं ज्ञानमस्मभ्यं दत्तेत्यर्थ: । व: युष्माकं , य: शिवतम: सुखातिशयहेतु: । रस: रसनेन्द्रियग्राह्यो रस: तस्येति द्वितीयार्थे षष्ठी । तं रसं भाजयत इहलोके । अस्मान् किमिव उशत्य: कामयमाना: मातर: क्षीरादिसेचने यथा भाजयन्ति तथा । युष्मदीयं रसं, अस्मभ्यं दत्तेत्यर्थ: अपि च तस्मै इति द्वितीयार्थे चतुर्थी । तं रसं: अरं अलं पर्याप्तं गमाम प्राप्नुयामेत्यर्थ : । व: युष्माकं । यस्येति तृतीयार्थे षष्ठी । येन रसेन क्षयायेतिद्वितीयार्थे चतुर्थी । क्षयं —निवासम् अस्मदीयं जिन्वथ—प्रीणयथ हे आप: जनयथ धनपुत्रपौत्रादिभि: प्रजा: न: अस्माकं संपादयथेति व्यास: ॥

१०६ गायत्रीमन्त्रार्थ : —

तत्सवितुरिति देवस्य सवितु: य: भर्ग: न: धिय: प्रचोदयात् । तत् वरेण्यं धीमहि इत्यन्वय: ।

चस्थत्वाद्योतनाद्वापि भानुर्देव उदाहृत
जगत्प्रसवहेतुत्वात् स एव सविता भवेत् ॥
तत्संबन्धि च यो भर्ग : पापानां भर्जकत्वतः ।
अस्माकं कार्मविषये बुद्धिं प्रेरयतीति यत् ॥
तत् ब्रह्म प्रार्थनीयं स्यात् वरणीयमुपास्महे इत्यर्थः ।

तथा च वरदराजीये नित्यमन्त्रव्याख्याने तच्छब्दश्रुतेर्य-च्छब्दोऽध्याहार्यः ।

सवितुः जगतां प्रसवितुः । "सविता वै प्रसवानामीशे" "सविता वे प्रसविता" । "उतेशिषे प्रसवस्य त्वमेक इत्" इत्यादि श्रुतेः । वरेण्यं - सर्वेषां भजनीयं । भर्गः प्रकाशदा नानाजगतो बाह्याभ्यन्तरतमोभञ्जनाद्वा । कालात्मकतया सकलकर्मफलपाकहेतुत्वेन भर्जनाद्वा पुष्टिप्रदानेन भूतानां भरणाद्वा भर्गः । देवस्य उद्योतमानस्य । धीमहि चिन्तयामः । देवस्य सवितुः वरेण्यं यत् भर्गः तत् ध्यायामः इत्यर्थः । तच्छब्दो ब्रह्म वाचकत्वेन प्रसिद्धः । 'ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधस्मृतः' इति । भगवद्गीता स्मरणात् आदित्यमण्डलान्तर्वर्तिनं पुरुषं अनुचिन्तयामीति यावत् । त एषोऽन्तरादित्ये हिरण्मयः पुरुषः अथो य एष एतस्मिन् मण्डलेऽर्चिषिपुरुषः इत्यादि श्रुतेः ।

निरुक्तभाष्येतु—

यः सविता, नः - अस्माकं, धियः - हानोपादानादिविषयाणि ज्ञानानि, प्रचोदयात् - प्रचोदयति - प्रवर्तयति, तस्य देवस्य सवितुः तत् भर्गः चिन्तयामः इति ।

१०९ मित्रस्येति—

मित्रस्य - सूर्यस्य चर्षण योमनुष्याः तां धारयति प्रदान-द्वारेणेति चर्षणीधृत् । तस्य श्रवो दीप्तिनाम, तदिहोपचारात्त-द्युतिमण्डले वर्तते । देवस्य प्रकाशमानस्य, सानसि मण्डल-विशेषणमेतत् संभजनीयं इत्यर्थः । सत्यं परमार्थभूतं, चित्राणि

श्रवांसि-तेजांसि-येषां अग्न्यादीनां त इमे चित्रश्रवसः तेषां मध्ये उत्कृष्टमेव भूतं वयं विदाम इति वाक्यशेषः। प्रजानन् सर्वमिदं करतलामलकवत् पश्यन् मित्रः सूर्यः जनान् यातयति-व्यापारयतः करोति। मित्र एव वृष्टिप्रदानेन धारयति पृथिवीस्थं प्राणिजालं उतद्यां दिवमपि उपलक्षणञ्चैतत् सकलभुवनानाम्। किञ्च मित्रः कृष्टीः तान् पुण्यपापयोः प्रवर्तमानान् अनिमिषा अनिमिषेण दिव्येन चक्षुषा अभिचष्टे आभिमुख्येन पश्यति यः तस्मै सत्याय नित्यरूपाय हव्यं चरुपुरोडाशादि घृतवत् घृतसिक्तं विधेम दद्म इत्यर्थः।

प्रसमित्रेति —

हे मित्र सः मर्तः मर्त्यः प्रास्तु भवतु। कीदृशः प्रयस्वान् बह्वन्नः कोऽसौ। यः यजमानः, ते तुभ्यं, आदित्य-अदितेः पुत्र शिक्षति ददाति।

व्रतमिति—

कर्म नाम व्रतेन यागाख्य कर्मणः प्रकृतत्वात् घृतवद्धविरिति संबध्यते। कर्मणि यो हविर्ददाति सः अन्नवान् भवतीतियावत्। न केवलमन्नवानेव भवत्यिवति। किं तर्हि न हन्यते मृत्युना न जीयते। ज्यावपोहानौ शतवत्सरल क्षणादायुषो न जीयते। त्वोतः त्वया रक्षितः। एनं त्वदारा-धनारं अंहः पापं न अश्नाति संबध्नाति। अन्तितः — समीपे इहजन्मनि न दूरात्। पूर्वजन्मनि कृतं पापञ्च न संबध्नाति इत्यर्थः।

इमं मे वरुण इति—

शुनश्शेपो वरुणं प्रार्थयते। हे वरुण इमं अस्मदीयं हवं स्तोत्रं, श्रुधी-शृणु श्रुत्वा च अद्यैव मां मृडय-सुखय। यस्मादहं त्वामवस्युः। आत्मनोरक्षणमिच्छसन्न् आचके - आभिमुख्येन प्रार्थयामि। कैश्शब्दै तत्वायाम्ोति हे वरुण ब्रह्मणा मन्त्रेण वन्दमानः स्तुतवानहम्। तदर्थमेव त्वां यामि-भजे। हविर्भि

चरपुरोडाशादिभिः। यजमानोपि। सर्वंन्तदेवाशास्ते। हे उरुशंस – बहुभिर्यजमानैः स्तूयमान। इह अस्मिन् काले। अस्मदीयां विज्ञापनां अहेडमानः अकुत्स्यमानः, बोधि – बुध्यस्व। किं पुनस्तत्प्रार्थनीयमित्याह मानः इति नः अस्माकं आयुः जीवितं मा प्रमोषीः मा अपहर्षीरित्यर्थः।

तच्चक्षुरिति—

तत् आदित्याख्यज्योतिः, चक्षुः सर्वस्य साक्षीभूतं, देवहितं अग्निहोत्रादिहविः प्रदानार्थं अहोरात्रादिकालस्य विभाजकतया देवानां हितकरं पुरस्तात् पूर्वस्यान्दिशि. शुक्रं शुक्लं उच्चरत्-अदगच्चत्। ज्योतिरादित्याख्यं पश्येम। कियन्तं कालं-शरदश्शतम् – शतवत्सरं जीवेम। शतसंवत्सरकालं सर्वं-सम्पद्भिस्सह जीवनमाशास्यते।न प्राणधारणमित्यर्थः।

यत्किञ्चेदमिति—

हे वरुण यत्किञ्च – यत्किञ्चित् इदं ईदृशं दैव्ये देवसमूहे। जने अभिद्रोहं पापरूपमपकारं. मनुष्याः वयं चरामसि कृतवन्तः। अचित्ती प्रथमा बहुवचनस्य इकारादेशः-अचित्ता -अज्ञानिनो वयम तवधर्मपरिचर्यां द्रवं युयोपिमानाशितवन्तः। मा इति प्रतिषेधार्थः नः अस्मान् तस्मादेनसः – पापात् मारीरिषः – मा हिंसीरित्यर्थः। एवं वैद्यनाथदीक्षितीये दृष्टम्।

११० उपवासव्रतादौ दिनप्रमाणम्—

यस्मिन् अस्तमियाद्भानुः तन्नक्षत्रमुपोषणे।
मुख्यन्तस्या संभवेतु गृहीतव्यं निशीयुक्
उदये त्रिमुहूर्तस्थ नक्षत्रं व्रतदानयो।
दिनद्वये त्वथात्वे तु पूर्वं स्यात् बलवत्तरम्।
श्रवणन्त्वपरं ग्राह्यमुपाकर्मणि कर्मणि। इति कालनिर्णये।

स्कान्दे तु—

यान्तिथिं समनुप्राप्य यात्यस्तं पद्मिनीप्रियः ।
सा तिथिस्तद्दिने प्रोक्ता त्रिमुहूर्ता च या भवेत् ॥ इति ।

शिवरहस्यसौरपुराणयोरपि—

यां प्राप्यास्तमुपैत्यर्क सा चे द्वात्रिमुहूर्तगा
धर्मकृत्येषु सर्वेषु सम्पूर्णांतान्तिथिं विदुः ॥ इति ।

वृद्धवसिष्ठोऽपि—

यस्यान्तिथावस्तमितसूर्यस्तु त्रिमूहूर्तगाम् ।
यापदानजपादिभ्यः तामेवोपक्रमेत्तिथिम् ॥ इति ।

भविष्योत्तरे—

मुहूर्तो नन्दिनन्नक्तं प्रवदन्ति मनीषिणः ।
नक्षत्रदर्शनान्नक्त महमन्ये गणाधिपः ॥ इति ।

जनभेदेन कालभेदमाह देवलः —

नक्षत्रदर्शनान्नक्तं गृहस्थस्य बुधैस्मृतम् ।
यतेर्दिनाष्टमे भागे तस्य रात्रौ निषिध्यते ॥ इति ।

स्मृत्यन्तरेपि—

नक्तन्निशायां कुर्वीत गृहस्थो निधि संयुतः ।
यतिश्च विधवा चैव कुर्यात्तत्सदिवाकरम् ॥
सदिवाकरन्तु तत्प्रोक्तमन्त्यमैभ्यधिकद्वये ।
निशानक्तन्तु विज्ञेयं यामार्धे प्रथमेसति ॥ इति ।

व्यासोऽपि—

त्रिमुहूर्तः प्रदोषस्यात् भानावस्तंगते सति ।
नक्तन्तत्रतु कर्तव्यमिति शास्त्रस्य निश्चयः ॥ इति ।

भविष्योत्तरे तु—

यत्वादित्यदिने ब्रह्मन् नक्तं कुर्वन्ति मानवाः ।
दिनान्ते तेऽपि भुञ्जीरन् निषेधाद्रात्रिभोजने ॥ इति ।

व्यासः—

मुहूर्तत्रितयं प्रातस्तावानेव तु संगवः ॥ इति ।

वृद्धपराशरोऽपि—

लेखाप्रभृत्यथादित्यमुहूर्तास्त्रय एव तु ।
प्रातस्तुसम्मृतः कालो भागश्चाह्नस्सपञ्चकः ॥ इति ।
प्रातस्संगवमध्याह्नाः इत्यन्यत्र च ।

१११ पुर्वाह्णादि कालविभागः —

स्कान्दे तु—

ऊर्ध्वं सूर्योदयात्प्रोक्तं मुहूर्तानान्तु पञ्चकम् ।
पूर्वाह्णो मध्यमन्तद्वदपराह्णस्तथैव च ॥ इति ।

११२ एकादशिद्वादश्युपवासविषयः

स्मृत्यन्तरेतु—

उपवासेत्वशक्तानामशीतेरूर्ध्वजीविनाम्
एकभक्तादिकं कार्यमाह बोधायनो मुनिः ॥ इति ।

मार्कण्डेयोऽपि—

एकभक्तेन नक्तेन तथैवायाचितेन च ।
उपवासेन दानेन न निर्द्वादशिको भवेत् ॥ इति ।

कूर्मपुराणे —

एकभक्तेन नक्तेन क्षीणवृद्धातुरः क्षिपेत् ।
नातिक्रमेद्द्वादशीन्तु उपवासव्रतो भवेदिति ॥

पुलस्त्योऽपि—

एकादश्यां न भुञ्जीत नारीदृष्टे रजस्यपि ॥ इति ।

ऋष्यशृङ्गोऽपि—

सप्रवृत्तेऽपि रजसि न त्याज्यं द्वादशीव्रतम् ।। इति ।

सत्यव्रतोऽपि—

प्रारब्ध दीर्घतपसान्नारीणां यद्रजो भवेत् ।
न तत्रापि व्रतस्य स्यादुपरोधः कदाचन ।। इति ।

कूर्मपुराणे तु—

सूतके च नरस्नात्वा प्रणम्य मनसा हरिम् ।
एकादश्यान्न भुञ्जीत व्रतमेव न लुप्यते ।।
मृतकेपि न भुञ्जीत एकादश्यां सदा नरः ।,
द्वादश्यान्तु समश्नीयात् स्नात्वा विष्णुं प्रणम्य च ।
आशौचान्ते नरस्नात्वा पूजयित्वा जनार्दनम् ।
दानं दत्वा विधानेन व्रतस्य फलमश्नुते ।। इति ।
परमापदमापन्ने हर्षे वा समुपस्थिते।
सूतके मृतके चापि न त्यजेद्द्वादशीव्रतम् ।।

इति स्मृत्यन्तरेऽपि ।

२२३ उपवासश्राद्धयोयागे

कात्यायनोऽपि —

उपवासो यदा नित्यः श्राद्धन्नैमित्तिकं भवेत् ।
उपवासन्तदा कुर्यात् आघ्रायपितृसेवितम् ।।
मातापित्रोः क्षये प्राप्ते भवेदेकादशी यदा ।
अभ्यर्च्यपितृदेवांश्चाशिघ्रे तिपतृसेवितम् ।। इति ।

विष्णुरहस्ये तु—

अथ नित्योपवासीचेत् सायंप्रातर्भुजोक्रियाम् ।
वर्जयेन्मतिमान् विप्रस्संप्राप्ते हरिवासरे ।। इति ।

ब्रह्मकैवर्तकेऽपि—

इति विज्ञाय कुर्वीतावश्यमेकादशी व्रतम् ।
विशेषनियमेनाहोरात्रं भुक्तिविवर्जितः ।। इति ।